सर्व्वा एताः कथाः प्रकाश्य त्वं यीशुख्रीष्टस्य धर्म्मकथाभिः शास्त्रसुशिक्षित-
हितोपदेशैश्च मनसि पुष्टो भूत्वा यीशुख्रीष्टस्य योग्यसेवको भविष्यसि।
७ त्वं दुर्वृत्तानां वृद्धयोषिताम् आख्यायिकाश्च परित्यज्य धर्म्मसेवार्थं
८ यत्नं कुरु यतः शारीरिको यत्नः स्वल्पफलदायको भवति किन्तु धर्म्म-
९ सेवनम् इह प्रेत्य च प्रतिज्ञायुक्तं सत् सर्व्वत्र फलदायकं भवति। एषा
१० कथा विश्वसनीया सर्व्वैषां ग्राह्या च तस्मान् मानवानां विशेषतो विश्वा-
सिनां त्रातारम् अमरम् ईश्वरं प्रत्याश्य वयं परिश्रम्य निन्दां भुञ्ज्महे।
११ त्वं तां कथां प्रचार्य्य समुपदिश। अपरञ्च तव यौवनावस्थाहेतोः
१२ कोपि त्वां तुच्छं न कुर्य्याद् एतदर्थं त्वम् आलापेनाचारेण प्रेम्ना
१३ स्वभावेन विश्वासेन शुचित्वेन च विश्वासिनां दृष्टान्तस्वरूपो भव। यावद्
अहं नोपतिष्ठामि तावत् त्वम् अध्ययने प्रचारणे प्रोपदेशे च मनो
१४ निधत्स्व तथा भविष्यद्वाक्यानुसारतः प्राचाम् उपदेष्टृणां हस्तार्पणेन
१५ यद्दानं लब्धवान् तस्मिन् मा शिथिलीभव। अपरञ्च सर्व्वेषां सन्निधौ
त्वदीयं नैपुण्यं यत् प्रकाशते तत्कृते मनो निधाय सर्व्वेतेषु नितान्तं
१६ यत्नं कुरुष्व। स्वस्मिन् उपदेशे च सतर्कः सन् तत्र नित्यं प्रवर्त्तस्व तत्
कृत्वा स्वस्य श्रोतृणाञ्च परित्राणं करिष्यसि।

---

## ५ पञ्चमोऽध्यायः।

१ भर्त्सनं विधवापालनञ्च १७ प्राचीनलोकानां निरूपणं २२ तिमथिं प्रति पौलस्य विशेषोपदेशश्च।

१ त्वं प्राचीनं न तिरस्कुरु किन्तु तं पितृतुल्यं यूनो भ्रातृतुल्यान् प्राचीना
२ योषितो मातृतुल्याः सर्व्वाः शुद्धाचारै र्युवती र्भगिनीतुल्याश्च विदित्वा
३ विनयस्व। अपरं सत्यविधवाः प्रतिपालयस्व। यः कश्चिद् विधवायाः
४ पुत्त्रः पौत्त्रो वा तिष्ठति स प्रथमतः स्वीयपरिजनानां सेवां कर्त्तुं पित्रोः
प्रत्युपकर्त्तुञ्च शिक्षतां यत एतादृक् कर्म्मेश्वरस्य साक्षाद् उत्तमं
५ ग्राह्यञ्च जायते। अपरञ्च या नारी विधवा नाथहीना च सा ईश्वरस्याश्रये
६ स्थित्वा दिवानिशं निवेदनं प्रार्थनाश्च कुर्व्वती कालं यापयति। किन्

या नारी सुखभोगासक्ता सा जीवत्यपि मृता भवति। अतएव तासाम् ७
अपराधो यन् न घटते तन्निमित्तं ता एतानि सर्व्वाण्याज्ञापय। यदि ८
कश्चिद् स्वीयबन्धून् विशेषतः स्वीयपरिजनान् न पालयति तर्हि स
धर्म्मात् च्युतः सन् अविश्वासिनोऽप्यधमो भवति। अपरञ्च या योषित् ९
षष्टिवत्सरेभ्योऽधिकवत्सरपर्य्यन्तम् एकस्वामिका भूत्वा बालकपोषणम् १०
आतिथ्यं पवित्रलोकानां चरणप्रक्षालनं दुःखिलोकानाम् उपकरणम् एतेषु
कर्म्मसु प्रवृत्ता सती सुख्यातिं प्राप्ता सैव सत्यविधवात्वेन गणिता
भवति। किन्तु युवती र्विधवाः परित्यज यतस्ताः ख्रीष्टस्य विरुद्धं ११
स्वच्छन्दचारिण्यो भूत्वा पुनर्व्विवाहं करिष्यन्ति। इत्थं पूर्व्वधर्म्मं परि- १२
त्यज्य दण्डपात्राणि भविष्यन्ति। यस्मात् ता गृहे भ्रमित्वा सालस्या १३
भवन्ति केवलं तन्न क्रमशः कुत्सिताख्यायिकाम् पराधिकारचर्चाञ्च कृत्वा
अनुपयुक्ताः कथाः कथयितुं शिक्षन्ते। अतएव पुनर्व्विवाहं कर्त्तुं सन्तानान् १४
उत्पादयितुं संसारं कर्त्तुं निन्दां कर्त्तुं शत्रुभ्यः कमपि सुयोगं न दातुञ्च
युवती र्विधवा अहमाज्ञापयामि। यतः कतिपयविधवा इदानीमेव शैतानः १५
पश्चाद् गामिन्यो जाताः। अपरञ्च विश्वासिन्या विश्वासिनो वा यस्य १६
कस्यापि जनस्य परिवाराणां मध्ये विधवा तिष्ठति स समाजस्योपरि
भारं न न्यस्य तासाम् उपकारं कुर्य्यात् ततः समाजः सत्यविधवानां
उपकारं कर्त्तुं शक्ष्यति।

ये प्राञ्च उत्तमं शासति विशेषतो य ईश्वरवाक्योपदेशेन परिश्राम्यन्ति १७
ते द्विगुणभृतिप्राप्तियोग्यत्वेन गणिता भवन्तु। यस्मात् शास्त्रे लिखित- १८
मिदमास्ते, त्वं शस्यमर्द्दकस्य वृषभस्य मुखं मा बधान। अपरमपि
परिश्रमकारी स्वीयवेतनस्य योग्यो भवति। द्वौ त्रीन् वा साक्षिणो विना १९
प्राचां विरुद्धम् अपवादवाक्यं मा गृहाण। अपरं यदन्ये लोका २०
बिभ्यति तदर्थं सर्व्वेषां समक्षं दुष्टलोकान् भर्त्सयस्व। अहम् ईश्वरस्य २१
प्रभो र्यीशुख्रीष्टस्य मनोनीतदिव्यदूतानाञ्च गोचरे त्वाम् इत्याज्ञापयामि
त्वं मुखापेक्षां पक्षपातञ्च न कृत्वा ममैतानि वाक्यानि पालयस्व।

२२ अकस्मात् कस्याप्युपरि हस्तार्पणं मा कार्षीः परकीयपापेन च पाप-
२३ युक्तो मा भूः शुचिं स्वं रक्ष। अपरं त्वदीयोदरपीडाया वारंवारं
दुर्व्बलतायाश्च निमित्तं केवलं कीलालं न पीत्वा किञ्चिन् मद्यं पिव।
२४ कस्यचित् पापानि विचारात् पूर्व्वं कस्यचिच्च पश्चात् प्रकाशितानि
२५ भवन्ति। अपरञ्च कस्यचित् सत्कर्म्माणि तद्वत् पूर्व्वं प्रकाशितानि भवन्ति
तदन्यथा सति चिरकालं गुप्तानि स्थातुं न शक्ष्यन्ति।

---

६ षष्ठोऽध्यायः।

१ दासानां कर्त्तव्यं कर्म्म दुष्टोपदेशकस्यत्यागो धर्म्मफलञ्च ११ धर्म्मे तिमथिं प्रति पौलस्य निवेदनं १७ धनिलोकान् कथमुपदेष्टव्यं तत्कथनं २० पत्रस्य समाप्तिश्च।

१ अपरम् ईश्वरस्य नाम्न उपदेशस्य च निन्दा यथा न जायते तदर्थं
स्वामिनाम् अधीना दासाः स्वीयं स्वीयम् ऐहिकप्रभुं सर्व्वसमादरयोग्यं
२ जानन्तु। अपरञ्च विश्वासिनः प्रभूनामधीना दासा भ्रातृत्वात् स्वं स्वं प्रभुं
नावजानीयुः किन्तु ते विश्वास्याः प्रियाः कर्म्मफलभोक्तारश्चेति विज्ञाय
३ तान् अधिकं सेवेरन् इत्थं शिक्षय समुपदिश च। यो जन इतरशिक्षाम् उपदिश्य
प्रभोरस्माकं यीशुख्रीष्टस्य हितवाक्यम् ईश्वरसेवाया उपयुक्ताम् उपदेशञ्च
४ न स्वीकरोति सोऽहङ्कारेण स्फीतः सर्व्वथा ज्ञानहीनश्च। अपरम्
दुष्टात्मनां सत्यताया: पराङ्मुखानां लाभार्थम् ईश्वरसेवनं मन्यमानानाञ्च
५ मानुषाणाम् ईर्षाविरोधापवाददुष्टासूयाविवादजनयितृभ्यां वाग्युद्ध
६ विचाराभ्यां रोगयुक्तो भवति, एतादृग् जनात् पृथग्भव। परिमित-
७ भोगेन सार्द्धं यदीश्वरसेवनं तदेव परमलाभो भवति। अस्मिन् जगति वयं
किमपि वस्तु गृहीत्वा नागता एतस्मादपि किञ्चिन् नेतुं न शक्ष्यामः,
८ इति निश्चितं विद्यते। अतएवान्नवस्त्रयोः सतोरेव सन्तोष्टुम् अस्माकम्
९ उचितम्। ये धनलोभिनो भवन्ति ते लोकान् विनाशे नरके
च मज्जयन्ति येऽभिलाषा एतादृशेषु अज्ञानहिंसाजनकाभिलाषेषु
परीक्षायां उन्माथे च पतन्ति। निखिलानिष्टानां मूलं धनाशा तया धनम्

आकाङ्क्षमाणा कियन्तो लोका धर्म्मभ्रष्टा भूत्वा नानादुःखैः स्वान्
विद्धान् अकुर्व्वन्।

हे ईश्वरस्य लोक त्वम् एतेभ्यः पलायनं कृत्वा धर्म्मेश्वरसेवा प्रत्ययः प्रेम ११
धैर्य्यं मार्द्दवम् एतेषां पश्चाद्गामी भव। अपरं धर्म्मस्योत्तमयुद्धेन युद्ध्यानन्त- १२
परमायु र्धारय, तत्कृते त्वमाहूतोऽभवः, तथा बहुसाक्षिणां सम्मुख उत्तमं
साक्ष्यं दत्तवान्। अपरं सर्व्वेषां सजीवनकर्त्तुरीश्वरस्य साक्षात् पन्तिय- १३
पिलातस्य समीपे चोत्तमसाक्ष्यदातुः ख्रीष्टयीशोः समक्षम् अहं त्वामित्या-
ज्ञापयामि। य एकाकी नित्योऽगम्यतेजोनिवासी यं कोपि मनुजः १४
कदापि न दृष्टवान् द्रष्टुं न शक्नोति च तादृशः प्रभूनां प्रभू राज्ञां राजा
अद्वितीयः सम्राट् सच्चिदानन्दः परमेश्वरः स निजसमये ख्रीष्टस्य यद् १५
आगमनं प्रकाशयिष्यति त्वं तदागमनपर्य्यन्तं निष्कलङ्कत्वेन निर्द्दोषत्वेन
च एताम् आज्ञां पालयस्व। तस्य महिमानन्तपराक्रमौ प्रकाशितौ १६
उत्तमौ भवेताम्। तथास्तु।

ये जना एतस्य संसारस्य धनेन धनिनस्तान् गर्व्वं न कर्त्तुं चपले १७
धने न विश्वसितुं किन्त्वस्माकं भोगार्थं प्रभूतद्रव्यदाता योऽमर ईश्वर- १८
स्तस्मिन् विश्वसितुं लोकान् उपकर्त्तुं सत्कर्म्मधनेन धनिनो भवितुं
दानकारिणो विभागकारिणश्च भवितुं परलोकेऽनन्तपरमायुः प्राप्त्यर्थम् १९
उत्तमं धनं सञ्चेतुञ्च समादिश।

हे तिमथे, अपवित्रा निष्फलास्याख्यायिका काल्पनिकविद्याया विरो- २०
धनानि च परित्यज्य निजसमीपे समर्पितो य उपदेशस्तं रक्ष। यतः कति- २१
पया लोकास्तस्या विद्यायाः कथां मानित्वा ख्रीष्टीयधर्म्माद् भ्रष्टा अभवन्।
त्वां प्रत्यनुग्रहो भूयात्। इति।

# तिमथिं प्रति पौलस्य प्रेरितस्य द्वितीयं पत्रम्

१ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ३ तद्विश्वासकारणात् तिमथिं प्रति पौलस्य प्रेम ६ तथा धर्म्म-
कर्म्मणि दुःखभोगे च तिमथिं प्रति पौलस्योपदेशः १३ धर्म्मे स्थातुम् उपदेशः १५
कियतां लोकानां धर्म्मत्यागः, अनीषिफरस्य धर्म्मशीलत्वप्रकाशश्च।

१ ईश्वरेच्छया यीशुख्रीष्टेनानन्तपरमायुषो या प्रतिज्ञा तदनुसारतः
पौलनामा यीशुख्रीष्टस्य प्रेरितो निजप्रियपुत्राय तिमथये पत्रं
२ लिखति। तात ईश्वरः प्रभुरस्माकं यीशुख्रीष्टश्च त्वां प्रत्यनुग्रहं दयां
शान्तिञ्च क्रियात्।

३ अहं दिवानिशं निजप्रार्थनायां सततं त्वां स्मरामि तस्मात् पूर्व्वपुरुषाणां
४ मतानुसारतः पवित्रमनसा यमीश्वरं सेवे तस्य धन्यवादं करोमि। यो
विश्वासः प्रथमं तव मातामह्यां लोयां तव मातरि उनीकीयाञ्चासीत्
५ दृढं बुध्यामि स त्वय्यपि विद्यते त्वदीयं तम् अकपटं विश्वासं मनसि
निधाय तवाश्रुपातञ्च स्मृत्वानन्देन परिपूर्णो भवितुं त्वां द्रष्टुं बहु
वाञ्छामि।

६ अतएव मदीयकरार्पणेनेश्वरस्य यदनुग्रहदानं त्वयि विद्यते तद्
७ उज्ज्वालयितुं त्वां स्मारयामि। ईश्वरोऽस्मभ्यं भयजनकस्वभावं न दत्वा
८ शक्तिप्रेमसतर्कताजनकं स्वभावं दत्तवान्। अतएवास्माकं प्रभौ यत् साक्ष्यं
प्रभुकारणाद् योऽहं वन्दी तयोरुभयोस्त्वं न लज्जित्वेश्वरदत्तशक्त्यनु-
९ सारात् सुसंवादनिमित्तं दुःखस्य सहभागी भव। सोऽस्मान् परित्राण-
भाजनानि कृतवान्, तदस्माकं पुण्यकारणान्नहि किन्तु स्वीयेच्छानुसारतो
ऽस्माकं निस्तारार्थं सृष्टेः पूर्व्वम् ईश्वरेण दत्तो योऽनुग्रहस्तत्कारणात्
१० पवित्राह्वानेनास्मान् आहूतवान्। अपरञ्च मृत्युजेता सुसंवादेन परमायु-
षोऽमरत्वस्य च प्रकाशयिता योऽस्माकं परित्राता यीशुख्रीष्टस्तस्यावतारेण

योऽनुग्रह इदानीं प्रकाश्यते। अपरम् अहम् अन्यदेशिनां समीपे सुसं- ११
वादस्य प्रचारकत्वप्रेरितत्वशिक्षकत्वपदेषु नियुक्तोऽभवम्। तत्कारणाद् १२
अहं तानि सर्व्वाणि दुःखानि भुञ्जे तथापि लज्जितो न भवामि यतो
यस्मिन् विश्वसामि तं जानामि तथा तस्य हस्ते मम यद् अर्पितम् आस्ते
तत् स विचारदिनं यावद् अवितुं शक्नोति मम दृढविश्वासो विद्यते।
त्वं मम समीपे यानि सद्वाक्यानि श्रुतवान् ख्रीष्टयीशौ प्रत्ययेन १३
प्रेम्ना च सहितः स्वयं तेषां निदर्शनं धारय। अपरम् अस्माकम् अन्तर्वा- १४
सिना पवित्रेणात्मना तव निकटे समर्पितो य उत्तम उपदेशस्तम् अव।
अपरम् फुगिल्लहर्म्मगिनिप्रभृतय आशियादेशस्थाः सर्व्वे लोका मां १५
परित्यज्य गतवन्त इति त्वं जानासि। किन्तु प्रभुः अनीषिफरस्य परि- १६
जनेषु कृपां करोतु यस्मात् स मम शृङ्खलेन लज्जितो न भूत्वा मां पुनः
पुनराप्यायितम् अकार्षीत्। अपरञ्च स रोमनगरे तिष्ठन् यत्नतरम् अन्विष्य १७
ममोद्देशं प्राप्तवान् तस्मात् प्रभुस्तं प्रभो र्विचारदिने कृपां प्रापयेत्।
अपरम् इफिषनगरे स्थितं मां स बहुवारम् आप्यायितं कृतवान् इति त्वं १८
सम्यग् जानासि।

---

२ द्वितीयोऽध्यायः।

१ धर्म्मकर्म्मणि नित्यप्रवृत्ति र्दुःखसहिष्णुत्वं १४ तिमथियं प्रति कर्त्तव्याकर्त्तव्ययो र्नानोपदेशश्च।

हे मम पुत्र त्वं ख्रीष्टयीशुना योऽनुग्रहस्तस्य बलेन बलवान् भव। १
अपरं बहुभिः साक्षिभिः प्रमाणीकृतो मम य उपदेशस्त्वया श्रुत इतरान् २
शिक्षयितुं निपुणेषु विश्वास्येषु लोकेषु तम् अर्पय। यीशुख्रीष्टस्य कश्चिद् ३
उत्तमयोद्धेव क्लेशं सहस्व। यतः सेनापतये नियोक्तुस्तुष्ट्यर्थं योद्धा सांसा- ४
रिके व्यापारे नासक्तो भवति। अपरं यो मल्लै र्युध्यति स यदि ५
नियमानुसारतो न युध्यति तर्हि कदापि किरीटं प्राप्तुं न शक्नोति।
अपरं परिश्रमिकृषीवलानाम् प्रथमे फलप्राप्तिरुचिता। अहं यद् ६
वदामि तत् मनो निधेहि यतः प्रभुस्तुभ्यं सर्व्वत्र बुद्धिं देयात्। मम ७

८ सुसंवादस्य वचनानुसाराद् दायूदो वंशजातो यीशुख्रीष्टः श्मशानाद्
९ उत्थापितोऽभवत् तत् स्मर। तत्सुसंवादकारणाद् अहं दुष्कर्म्मेव बन्धन-
१० दशापन्नः सन् दुःखं भुञ्जे किन्त्वीश्वरस्य वाक्यं बद्धं न भवति। मनोनीता
लोका यत् ख्रीष्टयीशुना परित्राणं प्राप्य स्वर्गीयानन्तविभवं प्राप्नुवन्ति
११ तदर्थम् अहम् तेषां निमित्तम् एतानि सर्व्वाणि सहे। अपरम् एषा कथा
सत्या यदि वयं सहैव म्रियामहे तर्हि सहैव सजीवा अपि भविष्यामः; तथा
१२ यदि क्लेशं सहेमहि तर्हि सहैव राजत्वमपि करिष्यामः। किन्तु यदि वयं
१३ तं न स्वीकुर्य्याम तर्हि सोऽस्मान् न स्वीकरिष्यति। अपरं यदि वयं
न विश्वसाम तथापि सोऽविश्वास्यो न भविष्यति यतः स्वम् अपह्नोतुं
न शक्नोति।

१४ अहितं श्रोतृभ्रष्टकारि वाग्युद्धं न कर्त्तुं प्रभोः समक्षं तान् विनीय कथा
१५ एताः स्मारय। अपरञ्चेश्वरस्य समक्षं ग्राह्यम् अनिन्दनीयञ्च कर्म्मकारिणं
१६ सत्यवाक्यस्य विभागकल्पनायां निपुणञ्च स्वं दर्शयितुं चेष्टस्व। अपरम्
अशुची निरर्थिकाश्चाख्यायिका निषेध यतस्ताः कथाः पापं वर्द्धयन्ति।
१७ अपरं हुमिनेयः फिलीतश्च यादृशीं कथां कथयतः गलितक्षतवत्। मृता-
१८ नाम् उत्थानं जात तावित्युक्ता सत्यधर्म्माद् भ्रान्तौ अभवताम् अपरं कियतां
१९ लोकानां धर्म्मस्य मूलं उत्पाटितवन्तौ। तथापीश्वरस्य भित्तिमूलम् अच-
लत्वेन स्थिरं विद्यते तस्योपरि कथैषा मुद्राङ्किता विद्यते परमेश्वरः
स्वीयलोकान् जानाति तथा यो जनः ख्रीष्टस्य नाम गृह्णाति सोऽधर्म्मं
२० परित्यजेत्। किन्तु प्रधानगेहे सुवर्णमयानि रूप्यमयानि च पात्राणि
केवलं नहि सन्ति काष्ठमयानि मृण्मयानि च पात्राणि सन्ति तेषां
२१ कियन्ति यशसः पात्राणि कियन्ति चायशसः पात्राणि भवन्ति। किन्तु
यो जनोऽधर्म्मादिभ्यः स्वं परिष्करोति स प्रभोः कार्य्यस्य योग्यः सर्व्व-
२२ कर्म्मणि सज्जीभूतः पवित्रं यशसःपात्रं भविष्यति। अतएव त्वं यौवनाव-
स्थाया अभिलाषं परित्यज्य ये पवित्रमनोभिः प्रभुं प्रति प्रार्थयन्ते
२३ तैः सार्द्धं धर्म्मः प्रत्ययः प्रेम शान्तिश्चैतेषु सर्व्वेषु सचेष्टो भव। अपरञ्च

अज्ञानात्मका अप्रामाणाः प्रश्ना वाग्युद्धस्योत्पादका भवन्तीति ज्ञात्वा तान् निषेध।
यतः प्रभो र्दासेन वाग्युद्धम् अकर्त्तव्यं किन्तु सुशिक्षां सहिष्णुतां सर्व्वान् २४
प्रति शान्तताञ्च प्रकाश्य मार्दवेन विरोधिनः प्रत्युपदेष्टनमेव कर्त्तव्यं। यतो २५
यदीश्वरः सत्यकथां स्वीकर्त्तुं तेषां मनांसि परावर्त्तयति तर्हि शैतानो २६
वाञ्छया मोहजालेन वेष्टिता एते लोकाश्चेतनां प्राप्य तस्मात् जालाद्
उद्धृता भवितुं शक्नुवन्ति।

---

३ तृतीयोऽध्यायः।

१ अन्त्यलोकेषु भविष्यद्वाक्यं १० पौलस्य स्वीयाचारस्य प्रकाशनं धर्म्मपुस्तकस्य प्रशंसा च।

शेषे महादुर्घटनायाः समया उपस्थास्यन्तीति जानीहि। यस्मात् तत् १
कालिका लोका आत्मप्रेमिणो लोभिन आत्मश्लाघिनोऽभिमानिनो २
निन्दका मातापित्रोरनाज्ञाग्राहिणः कृतघ्ना अपवित्रा निष्ठुरा नियमो- ३
ल्लङ्घिनो मृषापवादिनोऽजितेन्द्रियाः प्रचण्डाः साधुद्वेषिणो विश्वास- ४
घातका असङ्गतक्रोधिनो गर्व्विण ईश्वराद्पि सुखम् अभिलषन्तो धर्म्मस्य ५
वेशं धृत्वा धर्म्मस्य शक्त्यस्वीकारिणो भविष्यन्ति; एतादृशानां लोकानां संसर्गं
परित्यज। यतः पापेन वेष्टिताः शारीरिकनानासुखाभिलाषेणाकृष्टाः ६
सर्व्वदा शिक्षाकारिण्यस्तत्त्वज्ञानाभ्यासं कर्त्तुम् असमर्था या योषि- ७
तस्तासां गृहं प्रविश्य ये ता दासीतुल्याः कुर्व्वन्ति त एतादृशा
लोकाः। यथा यान्नि र्याम्ब्रिश्च मूसां प्रति विपक्षत्वम् अकरोत् तथा ८
मनसि दुष्टा धर्म्माद् भ्रष्टा एते लोका अपि सत्यधर्म्मं प्रति विपक्षतां
कुर्व्वन्ति। किन्तु ते पुनरग्रसरा भवितुं न शक्ष्यन्ति यस्मात् तयो ९
र्मूढता यथा सर्व्वेषां समक्षं प्रकाशिताऽभवत् एतेषामपि तथा भविष्यति।
मम यादृश उपदेश आचारो ऽभिप्रायो विश्वासश्चिरसहिष्णुता १०
प्रेम धैर्य्यञ्च, अपरम् आन्तियखिया-इकनिय-लूस्त्रानगरेषु मदुपरि ११
यादृशी ताडना क्लेशश्च घटितौ ताडनाश्च कीदृग् असहे एतत्
सर्व्वं तवागोचरं नहि, किन्तु तेभ्यः सर्व्वेभ्यो मां प्रभुररक्षीत्। अपरञ्च १२

ये लोकाः ख्रीष्टयीशुम् आश्रित्य धर्म्मकर्म्मणा कालं यापयितुम्
१३ वाञ्छन्ति तान् प्रति ताडना घटिष्यते। अपरं पापिष्ठाः प्रवञ्चका
१४ लोका भ्रमित्वा भ्रमं जनयित्वा, उत्तरोत्तरं दुष्टा भविष्यन्ति। त्वं कीदृ-
शात् मानवात् शिक्षितवान् इति विदित्वा शिक्षिते ज्ञाते च वाक्ये
१५ निविष्टचित्तः सन् तिष्ठ। यतः ख्रीष्टे यीशौ प्रत्ययेन परित्रातुं समर्थं
१६ यत् पवित्रं शास्त्रं तत् त्वं बाल्यकालमारभ्य ज्ञातोसि। अपरम् ईश्वरस्य सेवको
यत् सिद्धो भवति सर्व्वम् उत्तमं कर्म्म कर्त्तुं सज्जीभवति च तत्कार-
णात् तत्सर्व्वं शास्त्रम् ईश्वरस्याविर्भावेन दत्तम् अपरम् उपदेशे भर्त्सने
शासने धर्म्मशिक्षायां फलदायकं भवति।

---

४ चतुर्थोऽध्यायः।

१ सुसंवादप्रचारणे नित्यं प्रवर्त्तितुं विनयः ६ निजमृतिभाविसुखयोः पौलस्य कथनं
९ नानासंवादकथा १९ नमस्कारज्ञापनञ्च।

१ यः पुनरागमनं कृत्वा निजराज्ये जीवतां मृतानाञ्च लोकानां विचारं
करिष्यति तस्य प्रभो र्यीशुख्रीष्टस्येश्वरस्य च गोचरे त्वामहम् इत्या-
२ ज्ञापयामि। त्वं वाक्यं प्रचारय तथा समयेऽसमये च तत्र प्रवर्त्तस्व, अपरं
सर्व्वप्रकारेण दीर्घसहिष्णुत्वेनोपदेशेन च लोकविशेषान् भर्त्सयस्व
३ आधि विनयस्व। यतो यदा लोकाः सदुपदेशं सोढुम् अशक्ताः कर्णकण्डू-
४ यनविशिष्टाः सन्तः स्वीयस्वीयाभिलाषानुसारतः शिक्षकान् संग्रह्य सत्ये
वाक्ये कर्णम् अनारोप्य आख्यायिकाः श्रोतुं निविष्टचित्ता भविष्यन्ति
५ एतादृशसमय उपस्थास्यति। किन्तु त्वं सर्व्वस्मिन् समये सचेतनः सन्
दुःखं सहमानः सुसंवादप्रचारकस्य कार्य्यं कृत्वा स्वीयं सेवाकर्म्म साधय।
६ साम्प्रतं मम प्राणवियोगकाल उपस्थितः, तथाहं प्राणान् उत्-
७ स्रष्टुं सज्जितोस्मि। अपरम् अहम् उत्तमयुद्धं कृत्वा गमनमार्गं सम्पूर्णं कृत्वा
८ धर्म्मं पालयामि। अद्यारभ्य मदर्थम् एकं पुण्यमयं मुकुटं रक्षितमस्ति तद्
विचारदिने धार्म्मिको विचारयिता प्रभु र्मह्यं दास्यति केवलमह्यं नहि
किन्तु ये तदागमनम् आकाङ्क्षन्ति तेभ्योपि दास्यति।

त्वं त्वरया मत्समीपम् आगन्तुं यतस्व यतो दीमा इमं वर्त्तमानं ९
संसारम् ईहमानो मां परित्यज्य थिषलनीकीं गतवान् तथा क्रीष्कि १०
गोलातियां तीतश्च दाल्मातियां गतवान्। अपरं तुखिकम् अहम् इफिष- ११
नगरं प्रेषितवान्। इदानीं मया सार्द्धं केवलो लूक आस्ते। अतएव मम १२
सेवनपदस्योपकारी यो मार्कस्तं सङ्गिनं कृत्वा आगच्छ। अपरञ्च यद् १३
आच्छादनवस्त्रम् अहं कार्पस्य सार्द्धं त्रोयानगरे स्थापयित्वागच्छं तत्
पुस्तकानि च विशेषतश्चर्म्मपुस्तकानि गृहीत्वागच्छ। सिकन्दरः १४
कांस्यकारो मम बहुनिष्टं कृतवान् तस्मात् प्रभुस्तस्य कर्म्मणः समुचित-
प्रतिफलं दास्यति। त्वमपि तस्मात् सावधानस्तिष्ठ यतः सोऽस्माकं कथाया १५
अतीवविपरीतं कृतवान्। अपरञ्च मम प्रथमप्रत्युत्तरसमये कोपि मम १६
सपक्षो नाभवत् सर्व्वे मां पर्य्यत्यजन् इति तान् प्रति गणितं न भूयात्;
किन्तु मया यथा सुसंवादप्रचारणं सम्पूर्णं भवति सर्व्वदेशीया लोकास्तं १७
सुसंवादं शृण्वन्ति च तदर्थं प्रभु र्मम समीपवर्त्ती सन् मां बलवन्तं कृतवान्
ततः सिंहस्य मुखाद् अहं मुक्तोऽभवम्। अपरं प्रभु र्मां सर्व्वस्माद् दुष्कर्म्मणो १८
मोचयित्वा स्वर्गीयराज्यप्राप्तिपर्य्यन्तं रक्षिष्यति सर्व्वदा तं प्रति धन्यवादो
भूयात्। तथास्तु।

त्वं प्रिष्काम् आकुलाम् अनीषिफरस्य परिजनांश्च नमस्कुरु। इरास्तः १९
करिन्थनगरेऽतिष्ठत् किन्तु त्रफिमस्य पीडितत्वाद् अहं तं मिलीतनगरे २०
स्थापितवान्। त्वं हेमन्तकालात् पूर्व्वं शीघ्रम् आगन्तुं यतस्व। २१
उबूलः पूदि लीनः क्लौदिया सर्व्वे भ्रातृगणाश्च तुभ्यं नमः कुर्व्वन्ति। प्रभु २२
यीशुख्रीष्टस्तव हृदयवासी भूयात्। युष्मान् प्रत्यनुग्रहो भूयात्। इति।

# तीतं प्रति पौलस्य प्रेरितस्य पत्रम्।

## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ५ तीतस्य क्रीत्युपद्वीपस्थितेरभिप्रायः, उत्तमोपदेशकानां गुणनिर्णयः, दुष्टोपदेशकानां गुणनिर्णयश्च।

१ तथ्यभाषीश्वरः पूर्व्वम् अनन्तपरमायुषो यां प्रतिज्ञां कृतवान् अपरम्
अस्माकं त्रातुरीश्वरस्याज्ञानुसारतो मयि समर्पितेनानेन प्रचारकत्वपदेन
२ योग्यसमये यस्याः प्रतिज्ञायाः कथां प्राकाशयत् तस्याः प्रतिज्ञायाः
फलाकाङ्क्षिणाम् ईश्वरस्य मनोनीतानाञ्च लोकानां विश्वासार्थं सत्कर्म्म-
३ जनकस्य सत्यधर्म्मस्य स्वीकरणार्थञ्चेश्वरस्य दासो यीशुख्रीष्टस्य प्रेरितो
यः पौलः स साधारणधर्म्मानुसारतो निजपुत्रं तीतं प्रति पत्रं लिखति।
४ अस्माकं तात ईश्वरः परित्राता प्रभु र्यीशुख्रीष्टश्च त्वां प्रत्यनुग्रहं दयां
शान्तिञ्च क्रियास्ताम्।

५ असम्पूर्णकार्य्याणि सम्पूरयितुम् अपरम् मदीयाज्ञानुसारेण प्रतिनगरं
प्राचीनजनान् नियोक्तुम् अहं क्रीत्युपद्वीपे त्वां स्थापयित्वा गतवान्।
६ तस्माद् यो जनोऽनिन्दनीयो यस्य द्वे भार्य्ये नासाते यस्य च बालका
७ विश्वासिनोऽपचयेन नापोदिता नाबाध्याश्च तं नियोजय। यत ईश्वरस्य
भाण्डागाराध्यक्षस्येव अनिन्दनीयत्वम् अस्वेच्छाचारित्वम् अक्रोधन-
८ त्वम् अपानासक्तत्वम् अप्रहारकत्वम् अकुत्सितधनलोभित्वम् आति-
थेयत्वं सल्लोकानुरक्तत्वं सतर्कत्वं धर्म्मशीलत्वं पवित्रत्वं परिमितभोजित्वं
९ सदुपदेशेनोपदेष्टुं, विघ्नकारिणो निरुत्तरान् कर्त्तुञ्च समर्थत्वप्राप्त्यर्थम्
उपदेशानुसारतो विश्वास्यवाक्यस्य धारकत्वञ्च एतानि धर्म्माधिपतेर्-
१० वश्यभव्यानि। अनेके जना विशेषात् त्वक्छेदिमनुजानां मध्ये ये जना
११ अवाध्याः प्रलापवादिनइव वञ्चकाश्च ते कुत्सितधनार्थम् अयो-
ग्योपदेशेन कतिपयलोकाणां निखिलपरिवाराणां सुमतिं नाशयन्ति

तेषां मुखावरोधनम् उचितम्। अपरञ्च 'मिथ्यावाक्या हिंस्रकाजन्तवश्च १२
तुन्दालस्याः क्रीतिनो नित्यमेव'। इति वाक्यं तेषां कश्चन कविरपि
कथयति। इति साक्ष्यं तथ्यम् अतएव यिहूदीयेतिहासात् सत्यधर्माच्च १३
पराङ्मुखानां लोकानाम् आदेशम् अमानित्वा ते येन ख्रीष्टधर्मेण परम- १४
धार्म्मिका भवन्ति तादृक् तान् गाढं भर्त्सयस्व। ये स्वयं निर्म्मलास्तेषां १५
सन्निधौ सर्व्वमेव निर्म्मलं किन्तु ये स्वयम् अपवित्रा अविश्वासिनश्च तेषां
सन्निधौ किमपि वस्तु शुचि न भवति यतस्तेषां बुद्धिमनसी अमेध्ये।
ईश्वरं जानामइति ते वचसा वदन्ति किन्तु कर्म्मणि नास्तिकाः १६
सन्तो गर्हिता अनाज्ञाग्राहिणश्च भूत्वा निखिलाः सत्क्रिया अग्राह्याः
कुर्व्वन्ति।

---

२ द्वितीयोऽध्यायः।

१ स्थविरस्थविरायुवजनदासाः कथमुपदेष्टव्या इति निर्णयः ११ सुसंवादाभिप्रायश्च।

ये वाक्यैः प्राचीनलोकाः सचैतन्या धीराः सतर्काः सन्तो विश्वासेन १
प्रेम्ना धैर्य्येण च सुस्था भवन्ति तथा प्राचीनयोषितोऽपवादिनोऽपरि- २
मितमद्यपायिन्यश्च न भूत्वा सुशिक्षाकारिण्यः पवित्रलोका इव शुद्धा- ३
चारिण्यश्च भूत्वा नवीननारीः पत्यनुरक्ताः सन्तानस्नेहे सतर्कत्वे शुचित्वे ४
गृहिणीत्वे श्रेष्ठत्वे स्वामिनो वश्यत्वे प्रवर्त्तयन्ति, ईश्वरीयवाक्यस्या- ५
निन्दितत्वार्थम् एतादृशहितोपदेशीयान्युपयुक्तवाक्यानि तान् ज्ञापय।
अपरञ्च सुविवेकं यूनो विनयस्व। अपरं विपक्षा युष्माकं कमपि ६
दोषं धर्त्तुम् अशक्ता यथा लज्जन्ते तदर्थं उपदेशेन निर्दोषत्वं धीरत्वं ७
सरलत्वम् अदूष्यहितवाक्यञ्च प्रकाश्य सर्व्वच स्वयं सत्क्रियासु दृष्टान्तस्वरूपं
दर्शय। अपरं दासास्तैर्य्यम् अकृत्वा प्रभो र्वाक्यस्य उत्तरम् अदत्त्वा वश्याः ८
सन्तो यैः प्रभोः सन्तोषो जायते सम्यग्विश्वास्यत्वञ्च प्रकाश्यते तादृशानि ९
सर्व्वकर्म्माणि कृत्वा सर्व्वथास्माकं परित्रातुरीश्वरस्योपदेशभूषणं कर्त्तुं १०
तान् शिक्षय।

११ वयं यद् अधर्म्मं सांसारिकाभिलाषञ्च परित्यज्य, एतस्मिन् वर्त्तमान-
संसारे सुविवेकिनो न्याय्यकारिणो धार्म्मिकाश्च सन्तः कालं यापयामः,
१२ अपरम् अस्मान् सर्व्वस्मात् पापात् मोचयितुं सत्क्रियायाम् उत्सुका-
गान् कांश्चिद् विशेषलोकान् पवित्रीकर्त्तुञ्च निजप्राणान् दत्तवान्
१३ योऽस्माकं महान् ईश्वरस्त्राता यीशुख्रीष्टः, तस्यानन्ददायकं प्रत्याशितं
१४ यत् तेजः, तस्य प्रकाशम् अपेक्ष्य तिष्ठामः, इत्यभिप्रायेण परित्राणजनक-
स्येश्वरस्यानुग्रहः सर्व्वप्रकारमानुषाणां समीपे प्रकाशितः सन् अस्मान्
१५ शिक्षयति। एताः सर्व्वाः कथाः कथयित्वा सर्व्वसामर्थ्येन उपदिश भर्त्-
सयस्व च; कोपि त्वां तुच्छं न करोतु।

---

३ तृतीयोऽध्यायः।

१ कथम् उपदेष्टव्यम् इत्यस्य निर्णयः १२ तीतं प्रति पौलस्य विनयः पत्रसमाप्तिश्च।

१ राजत्वाधिपतित्वयोरधीनीभवितुं शासकानाम् आदेशं पालयितुं सर्व्व-
२ सुक्रियायां सज्जीभूय स्थातुं परान् अनिन्दितुं निर्व्विरोधिनो नम्रिणश्च
भवितुं सर्व्वेषां समीपे सर्व्वप्रकारस्त्रदुत्वं प्रकाशयितुञ्च लोकान् स्मारय।
३ यतः पूर्व्वं वयमपि निर्ब्बोधा अनाज्ञाग्राहिणो मुग्धा नानाभिलाषाणां
सुखानाञ्च सेवका ईर्ष्यया जिघांसया च कालयापिन घृणिताः परस्परम्
४ द्वेषाकारिण आस्महि। किन्तु वयम् ईश्वरस्यानुग्रहात् पुण्यवत्त्वेन
गणिताः सन्तो यथानन्तपरमायुषः प्रत्याशया उत्तराधिकारिणो भवाम
५ एतदर्थं मनुजान् प्रत्यस्माकं परित्रातुरीश्वरस्य दयानुग्रहयोः प्रकाशितयोः
६ सतोः सोऽस्मत्कृतपुण्येन नहि किन्तु पुनर्जन्मरूपप्रक्षालनेन, अपरम्
७ अस्माकं परित्राता यीशुख्रीष्टेनास्माकम् उपरि सम्पूर्णतो वृष्टो यः पवित्र
आत्मा तस्मात् परिष्करणेन निजदयानुसारतोऽस्मान् परित्रातवान्।
८ एषा कथा सत्या भवतीति निमित्तम् अहं त्वाम् आज्ञापयामि
यद् ईश्वरस्य विश्वासिनो जनाः साधुकर्म्माणु प्रवर्त्तितुं मनो निदधते
तद् दृढम् आज्ञापय यतो मानवानां ताः सर्व्वाः क्रिया एवोत्तमाः

फलदायिकाश्च। किन्तु मूढा वंशावली विरोधा व्यवस्थाया वितण्डाश्च ९
एतान् निषेध यतस्ते निष्प्रयोजनका मृषा च। यो जनो धर्म्माद् १०
भ्रष्टः स भ्रान्तः सन् पापं कृत्वा स्वतो दोषी भवति, इति विदित्वा ११
तम् एकवारं वा द्विरुपदिश्य बहिष्कुरु।

मया तव समीपम् आर्त्तिमातुखिकयोः प्रेषितयोः सतोस्त्वं निकपलौ १२
मम समीपम् आगन्तुं यत्नं कुरु तत्र स्थित्वा शीतकालं यापयितुं मतिम्
अकार्षं। किन्तु व्यवस्थापकसीनापल्लोनाप्लोरागमने यथा तयोः पाथेयस्य १३
कस्याप्यभावो न भवति तथा यतित्वा तावच्च प्रेषय। अपरम् अस्माकम् १४
अनुगतलोका यथा निष्फला न भवन्ति तदर्थं ते प्रयोजनीयकार्य्यार्थम्
उत्तमं वाणिज्यं शिक्षन्ताम्। मम सङ्गिनः सर्व्वे लोकास्त्वां नमस्कारं १५
ज्ञापयन्ति ये जनाः ख्रीष्टधर्म्मकारणाद् अस्मासु प्रेम कुर्व्वन्ति तान्
नमस्कुरु; युष्माकं सर्व्वान् प्रत्यनुग्रहो भूयात्। इति।

---

# फिलीमोनं प्रति पौलस्य प्रेरितस्य पत्रम्।



## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ४ फिलीमोनः प्रत्ययप्रेमकारणात् पौलस्यानन्दः ८ अनीषिमं
बन्धुं भ्रातृवद् ग्रहीतुञ्च फिलीमोनं प्रति पौलस्य निवेदनञ्च।

यीशुख्रीष्टकारणाद् वन्दिपौलस्तिमथिनामा कश्चिद् भ्राता च १
अस्माकं प्रियं सहकारिणं फिलीमोनं प्रियाम् आफियाम् सहसेनाम् २
आर्खिप्पं फिलीमोनगृहस्थितसमाजञ्च प्रति पत्रं लिखतः। अस्माकं तात ३
ईश्वरः प्रभु र्यीशुख्रीष्टश्च युष्मान् प्रति शान्तिम् अनुग्रहञ्च क्रियास्ताम्।
प्रभुं यीशुं प्रति त्वदीयं विश्वासं पवित्रलोकान् प्रति त्वदीयप्रेमदृष्टा- ४
न्तञ्च निशम्य युष्मासु ख्रीष्टयीशुसम्बन्धीया ये गुणाः सन्ति तान् ५

६ सर्व्वजनान् स्वीकारयितुं त्वदीया प्रत्ययजाता दानशीलता यथा सफला
भवति तदर्थम् अहं सर्व्वदा स्वीयप्रार्थनासु त्वदीयं नामोच्चार्य्येश्वरीयं
७ धन्यवादं करोमि। हे भ्रातस्त्वं पवित्रलोकान् प्रतिपालयसि एतत्कारणात्
तव प्रेम्ना वयं शान्तियुक्ताः परमाह्लादिताश्च जाताः।
८ यद्यपि ख्रीष्टेन बहुसामर्थ्ययुक्तः सन् कर्त्तव्यकर्म्मणि त्वाम् आज्ञापयितुं
९ शक्नोमि तथापि वृद्धोऽहं पौलः ख्रीष्टहेतो र्वन्दिभूत्वा प्रेम्ना त्वां विनीय
१० निवेदयामि। मम बन्धनसमये मया धर्म्माद् जातो योऽनीषिमनामा
११ मम पुत्रः, तदर्थं त्वां निवेदयामि। स पूर्व्वं तवानिष्टकारक आसीत्
१२ किन्त्विदानीं तव मम च हितकद् भवति। अतएव तव समीपं त्वां
१३ प्रेषयामि त्वं तं मदीयप्राणतुल्यं विज्ञाय गृहाण। सुसंवादार्थं मम
बन्धनदशायां त्वद्विनिमयेन तं स्थापयित्वा आत्मसेवनं कारयाणीति
१४ मतिं कृतवान्। किन्तु त्वदनुग्रहो यथा बलानुसारतो न भूत्वेच्छानु-
सारतो भवेद् तदर्थं त्वदभिमतम् अप्राप्य किमपि कर्त्तुं नेच्छम्।
१५ अपरं यत् त्वं चिरकालार्थं त गृह्लीयाः, तदर्थं स कतिपयकालं यावत्
१६ त्वत्तः पृथग् अभवत्। दासमिव गृह्लीया इति न किन्तु दासतोऽप्यधिक-
प्रियं भ्रातरमिव यतः स यदि मम प्रियस्तर्हि प्रभुना शरीरेण
१७ च तव ततोधिकप्रियो भविष्यति। अपरञ्च त्वं यदि माम्
१८ अंशकं मानयसि तर्हि तं मामिव गृहाण। स यदि तव कञ्चिद्
अन्यायम् अकरोत् वा तुभ्यम् ऋणं धारयते तर्हि तन् ममेति विदित्वा
१९ गणय। अहं तत् परिशोत्स्यामि, एतत् पौलोऽहं स्वहस्तेन लिखामि
किन्तु त्वं मत्सन्निधौ प्राणपर्य्यन्तं ऋणी विद्यसे कथामेतां न कथयामि।
२० हे भ्रातस्त्वया प्रभौ ममानन्दो भूयात् तथा त्वं प्रभौ मम प्राणान्
२१ आप्यायितान् कुरु। यतो यदहं वदामि त्वं ततोऽधिकं करिष्यसि तद्
२२ विदित्वा तवैतादृशाज्ञाग्राहित्वे विश्वस्य त्वां प्रतीत्यं लिखामि। तव
प्रार्थनया यद् अहं तव समीपे समर्पितो भविष्यामि ममैतादृशो
२३ विश्वासो जायते तस्मान् मन्निमित्तम् एकं वासगृहं सज्जीकर्त्तव्यं त्वया।

यीशुख्रीष्टकारणात् मया सह बन्दि र्य इपाफ्रा-मार्क-आरिस्तार्ख- २४
दीमा-लूकश्चेमे मया सहकारिणस्त्वां नमस्कारं वेदयन्ति। अस्माकं २५
प्रभुयीशुख्रीष्टस्यानुग्रहः सर्व्वदा युष्माकं हृदयवासी भूयात्। इति।

---

# इब्रिणः प्रति पौलस्य प्रेरितस्य पत्रम्।

## १ प्रथमोऽध्यायः।

१ ईश्वरस्य समीपाद् अस्मान् प्रति ख्रीष्टस्यागमनं गुणेन कर्म्मणा च दिव्यदूतेभ्य-स्तस्य श्रेष्ठत्वञ्च।

पुरातनै र्भविष्यद्वादिभिः पितृलोकेभ्यो नानासमये नानाप्रकारं १
कथितवान् य ईश्वरः स एतस्मिन् शेषकाले निजपुत्रेणास्मभ्यं कथितवान्।
तं पुत्रं सर्व्वाधिकारिणं कृतवान् तथा तेन सर्व्वजगन्ति सृष्टवान्। अपरं २
सएव पुत्र ईश्वरस्य महिम्नस्तेजसः सारस्य च मूर्त्ति र्भूत्वा स्वीयशक्ति- ३
वाक्येन सर्व्वं धधानो निजप्राणैरस्माकं पापमार्जनं कृत्वा ऊर्द्ध्वस्थस्य
महामहिम्नो दक्षिणपार्श्वे समुपविष्टवान्। दिव्यदूतगणादपि यथा स ४
प्रसिद्धनाम्नोऽधिकारी जातः, तथा तेभ्योपि श्रेष्ठो भवति। यतः

'त्वं मे पुत्रोसि चाद्य त्वां समुत्थापितवानहम्।'

अपरं 'अहं तव पिता त्वं मम पुत्रः'; दिव्यदूतानां मध्ये ईश्वरः कदा कम् ५
एतादृशं वाक्यम् उदितवान्? वरं जगति स्वीयम् अद्वितीयपुत्रम् अवता- ६
रितवान् तदा एतादृशीं कथाम् अकथयत् 'सर्व्वदेवा नमन्तु तं'। अपरं दूतेषु ७
वाक्यम् अवादीत् यथा

'स्वीयदूतगणश्चैव वायुरूपं करोति सः।
अग्निशिखास्वरूपान् स करोति निजसेवकान्।'

किन्तु पुत्रम् उद्दिश्य कथामेतां कथितवान् यथा ८

'हे ईश्वर सदा स्थायि तव सिंहासनं भवेत्।
एवं यथार्थतारूपो राजदण्डो भवेत् तव।
९ पुण्ये तु प्रीयसे त्वं हि त्वञ्च पापमृतीयसे।
अत ईश त्वदीयस्तु तव मित्रगणादपि।
अधिकानन्दतैलेन त्वाभिषिक्तं करोति हि।'
१० अपरञ्च यथा हे परेश्वर,
'आदितः पृथिवीमूलं त्वं स्थापयाञ्चकर्थ वै।
११ एवं त्वदीयहस्तेन कृतं गगणमण्डलं।
इमे विनंक्ष्यतस्त्वन्तु नित्यं संतिष्ठसि स्वयं।
१२ इदन्तु सकलं विश्वं संजरिष्यति वस्त्रवत्।
तस्मिन् संकोचिते विश्वे वस्त्रवत् परिवृत्स्यते।
त्वन्तु नित्यो न तेऽब्दास्तु चयं यास्यन्ति हि कचित्।'
१३ अपरञ्च 'तव शत्रूनहं यावत् पादपीठं करोमि न।
तावत् कालं मदीये त्वं दक्षपार्श्व उपाविश।'
१४ ईश्वर एतां कथां दिव्यदूतानां मध्ये कस्मै कदा कथितवान्? ये परित्राणस्याधिकारिणो भविष्यन्ति तेषां सेवनार्थं प्रेरिता एते दूताः सर्व्वे किं सेवनकारिण आत्मानो नहि?

---

२ द्वितीयोऽध्यायः।

१ सुसातः ख्रीष्टस्य श्रेष्ठत्वं ७ इस्रायेल्लोकदण्डात् तस्मिन् अविश्वासिनाम् अधिक दण्डनीयत्वञ्च।

१ वयं यथा कदापि श्रुतवाक्यं न विस्मरामस्तदर्थं तस्मिन् वाक्ये गाढं
२ मनोनिधानम् अस्माभिः कर्त्तव्यम्। दिव्यदूतगणैरुक्तवाक्यस्यामोघत्वाद्
३ यदि निखिलापराधस्याज्ञालङ्घनस्य च समुचितं प्रतिफलम् अभविष्यत
तर्हि प्रथमतः प्रभुना प्रोक्तं तत् श्रोतृभिरस्माकं समीपे निर्णीतं, अपरं चिह्नम्
४ अद्भुतं कर्म्म नानाविधाश्चर्य्यलक्षणं पवित्रेणात्मना दत्तं सामर्थ्यञ्च एतैः सर्व्वैः
स्वेच्छानुसारत ईश्वरेण प्रमाणीकृतं यन् महापरित्राणं तदेवावज्ञाय वयं

कथं रक्षिता भविष्यामः ? वयं यस्य भविष्यत्संसारस्य कथां कथयामः, तं ५
संसारं स दिव्यदूतानाम् अधीनं न कृतवान्। किन्तु कुत्रापि कश्चिद् ६
ईदृशं प्रमाणं दत्त्वा कथयति यथा

'एतादृशो मनुष्यः को यं संस्मरसि वै स्वयं।
तथा मनुष्यपुत्रो वा को यस्य गणयेः सदा।
७ किञ्चिन्न्यूनमकार्षीस्त्वं दिव्यदूतेभ्य एवं तं।
श्रीगौरवकिरीटेन तमेव पर्य्यभूषयः।
एवं त्वदीयहस्ताभ्यां कृतानामुपरि त्वया।
सर्व्वेषामेव वस्तूनामाधिपत्यमदीयत।'

सर्व्वेषु वशीभूतेषु सत्सु तस्यावशीभूतं किमपि न स्थास्यति किन्तु एत- ८
त्कालं यावत् वयं सर्व्वाणि तस्य वशीभूतानि न पश्यामः। तथापि यो यीशुः ९
ईश्वरस्यानुग्रहाद् एकैकजननिमित्तं मृत्युभोगं कर्त्तुं दिव्यदूतेभ्योऽपकृष्ट-
त्वेन कतिपयदिनान्यासीत् तं मृतिभोगार्थं वयं महिमगौरवकिरीटेन
भूषितं पश्यामः। अपरञ्च यस्माद् येन च कृत्स्नं वस्तु सृष्टम् अभवत् बहु- १०
सन्तानानां स्वर्गीयविभवानयने सति तेषां त्राणस्य सेनापतिं दुःखभोगेन
सिद्धं कर्त्तुं तस्योपयुक्तम् अभवत्। अनेन यः पवित्रं करोति ये च पवित्री- ११
कृता भवन्ति, एतदुभया एकस्य भवन्ति तस्मात् तान् भ्रातृन् वदितुं स न
लज्जते। तेन स उक्तवान्

यथा १२ 'प्रकाशयिष्ये त्वन्नाम मध्ये भ्रातृगणं मम।
त्वामेव च सभामध्ये प्रशंसिष्याम्यहं सदा।'

पुनरपि यथा १३ 'शरणं तं श्रजिष्यामि' ——————।

*पुनरपि यथा* 'पश्याहमीश्वरेणैव दत्ताः सन्ततयो मम।'

अपरं बालकानां रुधिरपललविशिष्टत्वात् मृतिशक्तेः निदानं यः शैतान् तं १४
मरणेन दमितुं तथा मृतिभयेन यावज्जीवं बद्धलोकान् उद्धर्त्तुं ख्रीष्टोऽपि १५
तद्वद् रुधिरपललविशिष्टो जातः। स दूतान् अनुद्धार्य्य इब्राहीमो वंशम् १६
उद्धारयति। अतएव यथा लोकानां पातकानां प्रायश्चित्तं कुर्य्याद् १७

ईश्वरमुद्दिश्य कृपालु र्विश्वास्यश्चैको महायाजको भवेत् तदर्थं सर्व्वथा
१८ स्वीयभ्रातृगणतुल्यत्वं तस्याचितम् अभवत्। तस्मात् स स्वयं परीक्षितः
सन् दुःखभोगेन परीक्षितान् उपकर्त्तुं शक्नोति।

---

## ३ तृतीयोऽध्यायः।

१ मूसातः ख्रीष्टस्य श्रेष्ठत्वं ७ इस्रायेलीयलोकदण्डात् तस्मिन्नविश्वासिलोकानाम् अधिकदण्डनीयत्वञ्च।

१ हे स्वर्गीयाह्वानस्य सहभागिनः पवित्रभ्रातरोऽस्माभिः स्वीकृत-
२ प्रेरितमहायाजकख्रीष्टयीशौ मनो निधत्त। मूसा यद्वत् स्वीयपरि-
वाराणां समीपे विश्वास्य आसीत् तद्वत् स नियोजकेश्वरस्य समीपे
३ विश्वास्य आस्ते। गृहस्य स्थपति र्यथा गृहाद् गौरवविशिष्टो भवति
४ तथा स मूसातोऽप्यधिकगौरवविशिष्ट आस्ते। एकैकस्य गृहस्य एकैकः
५ स्थपतिरास्ते किन्तु सर्व्वेषां स्थपतिरीश्वरः। मूसाः सेवकः सन् वक्तव्य-
६ वाक्यानां प्रमाणार्थं सर्व्वेषां परिवाराणां सन्निधौ विश्वास्य आसीत्;
७ किन्तु ख्रीष्टः पुत्रः सन् परिवाराणां विश्वास्य आस्ते। अपरञ्च यदि
प्रत्याशातो जातम् आनन्दम् अक्षोभञ्च शेषं यावद् गाढं स्थापयामस्तर्हि
वयमपि तस्य परिवारा भवामः।

तस्मात् पवित्र आत्मा इत्थं कथयति

८ 'यूयं यदि कथां तस्य श्रोतुमिच्छथ तर्हि वै।
मिरीवायामटव्याञ्च परीक्षादिवसे यथा।
तथान्तःकरणं चाद्य कुरुध्वं कठिनं नहि।
९ यतएव च युष्माकं ते पूर्व्वपुरुषाः पुरा।
मां विचार्य्य निरीक्ष्यापि पर्य्यैक्षन्त हि सर्व्वथा।
१० चत्वारिंशत्तु वर्षाणि यावदंशन्तु तत्प्रति।
विरक्तोऽकथयञ्चाहं लोका एते तु सर्व्वदा।
भ्रान्तान्तःकरणे नूनं पन्थानं व्यस्मरन् मम।
११ अतो हेतोरहं क्रोधात् शपथं कृतवांस्तदा।
ते जना मम विश्रामं न प्रवेक्ष्यन्ति निश्चितम्।

अतएव हे भ्रातरः सावधाना भवत, अमरेश्वरात् पराङ्मुखान् करोति १२
योऽविश्वासस्तेन युष्माकं कस्याप्यन्तःकरणं दुष्टं न जायेत। पापस्य १३
वञ्चनया युष्माकं कोऽपि यत् कठोरीकृतो न भवति तदर्थं दिवसे तिष्ठति
सति परस्परं प्रतिदिनम् उपदिशत। यतो वयं यं विश्वासं कर्त्तुम् आर- १४
भामहि तं यदि शेषं यावत् स्थिरं रचितुं शक्नुमः, तर्हि ख्रीष्टस्य फल-
भागिनो भवामः। तस्मात् तस्योक्तस्य वाक्यस्यानुसारेण 'यूयं यदि कथां १५
तस्य श्रोतुम् इच्छथ तर्हि वै' मिरोवायां यद्वत् तद्वत्, स्वीयान्तःकरणं
चाद्य कुरुध्वं कठिनं नहि'। के जनास्तदीयां कथां निशम्य तदीयं कोपं १६
प्राज्वलयन्? किं मुसाद्वारा मिसरदेशाद् आगताः प्रायेण सर्व्वे नहि?
तर्हि चत्वारिंशद् वत्सरान् केभ्यस्तुकोप? यैः पापानि कृतानि येषाञ्च १७
कुणपानि प्रान्तरे पतितानि तेभ्यः किं नहि? अपरं यूयं मम विश्रामं १८
न प्रवेक्ष्यथ स इति यं शपथं चकार सएव वा केषां विरुद्धः? किम्
अविश्वासिनां विरुद्धो नहि? तस्मात् तेऽविश्वासेन विश्रामं प्रवेष्टुं नाशक्नुवन् १९
इति वयं वीक्षामहे।

---

४ चतुर्थोऽध्यायः।

१ विश्वासेन विश्रामप्राप्तिः १२ ईश्वरस्य वादस्य शक्तिः १४ ख्रीष्टेनेश्वरसमीपगमनञ्च।

अपरं तस्य विश्रामं प्रवेष्टुं प्रतिज्ञा यदि तिष्ठति तर्हि चेद् १
अस्माकं कश्चित् तस्य प्रतिज्ञायाः फलेन वञ्चितो भवति एतस्माद् बिभेतुम्
अस्माकम् उचितम्। यत एतत्सुसंवादोऽस्माकं समीपे यादृक् प्रचा- २
रितोभवति तादृक् तेषां समीपेऽभवत् किन्तु तेषां श्रोतॄणाम् अविश्वासात्
प्रचारितं तद्वाक्यं तान् प्रति फलदायकं नाभवत्। किन्तु वयं विश्वस्य ३
तस्य विश्रामं प्रवेक्ष्यामः, यस्माद् जगतः प्रथमं कार्य्यसमाप्तेः परं
विश्रामे कृते सति स कथामिमां कथयामास ते मदीयं विश्रामं न
प्रवेक्ष्यन्ति क्रोधाद् इमं शपथं कृतवान्। अपरञ्च तत् सप्तमदिनमुद्दिश्य ४
कुत्रापि एतादृशम् उक्तम् आस्ते, ईश्वरः सप्तमदिने स्वीयात् सर्व्वकार्य्यात्

५ वक्ष्याम्यत्। स्थानान्तरेऽपरमप्युक्तम् आस्ते ते मदीयविश्रामं न प्रवे
६ क्ष्यन्ति। अतएव कैश्चित् लोकैः स विश्रामः प्राप्तव्यः, अपरञ्च येषां समीपे
७ सुसंवादः पूर्व्वं प्रचारितः तैरविश्वासकारणाद् स विश्रामो न प्राप्तः। पुनरपि
स किमपि दिनं निरूप्य एतत्कालात् परं दायूदा कथामेतां कथया-
माम यथोक्तम्, 'यूयं यदि कथां तस्य श्रोतुम् इच्छथ तर्हि वै। स्वी[ ]न्तः-
८ करणम् चाद्य कुरुध्वं कठिनं नहि'। अपरं यिहोशूये तेभ्यो [ ]श्रामं
दातुं शक्नुवति सति, ईश्वरस्तस्मात् परं भिन्नदिनम् उद्दिश्य [ ]ामपि
९ कथां नाकथयिष्यत्। अत ईश्वरस्य लोकेभ्यः स विश्रामस्तिष्ठति।
१० यतो यो जनस्तस्य विश्रामं प्रविशति स ईश्वर इव स्वीयकार्य्याद्
११ विश्राम्यति। कोपि यथा तस्याविश्वासस्य निदर्शनानुसारतः पतितो
न भवतीतिकारणाद् वयं तस्य विश्रामं प्रवेष्टुं यतामहै।

१२ ईश्वरस्य वादोऽमरः प्रभावविशिष्टश्च सर्व्वस्माद् द्विधारखड्गादपि
तीक्ष्णः, अपरं प्राणात्मनो र्ग्रन्थिमज्जयोश्च परिभेदको विच्छेदकारी च
१३ तथा मनसः सङ्कल्पसन्धानयो र्विज्ञः, अपरं कोऽपि प्राणी तस्यागोचरो
नहि यस्य समीपे स्वीया स्वीया कथास्माभिः कथयितव्या तस्य दृष्टौ
वस्तुमात्रम् अनावृतं प्रकाशितञ्चास्ते।

१४ अपरम् उच्चतमं स्वर्गं प्रविष्टो य ईश्वरस्य पुत्रो यीशुः सोऽस्माकं
१५ प्रधानयाजको भवति तस्माद् वयं स्वीकृतधर्म्मं दृढम् अवलम्बामहै। अस्मद्
दौर्ब्बल्येष्वस्माभिः सार्द्धं दुःखं भोक्तुम् असमर्थ एतादृशोऽस्माकं महाया-
१६ जको नहि स निष्पापोऽपि सन् वयमिव सर्व्वथा परीक्षितो जातः। अत-
एव कृपां ग्रहीतुं प्रयोजनीयसमय उपकारार्थम् अनुग्रहं प्राप्तुञ्च वयं
निर्भयाः सन्तोऽनुग्रहसिंहासनस्य समीपं याम।

---

५ पञ्चमोऽध्यायः।

१ ख्रीष्टस्य महायाजकत्वं ४ परमेश्वरेण तस्य महायाजकत्वपदे नियुक्तत्वं ११ इब्रिलोकानाम् अज्ञानत्वकारणाद् भर्त्सनञ्च।

१ इदानीं पापप्रायश्चित्तबलिञ्च उत्स्रष्टुं मनुष्याणां मनोनीतो यः

कश्चिन् महायाजक ईश्वरस्य कर्म्मसु नियुक्त आस्ते स यद् दौर्ब्बल्यवेष्टि- २
तत्वकारणाद् अज्ञानां विपथगामिनाञ्च लोकानां दुःखेन दुःखी भवति
तथा पापकारणात् केवलं लोकानां निमित्तं नहि निजकारणाच्च पाप- ३
प्रायश्चित्तबलिदानं करोति तत्र तस्य प्रयोजनम् आस्ते।

हारोणवत् ईश्वरेण न नियुक्तः सन् कोपि स्वयम् इमम् आदरं न ४
गृह्णाति तद्वत् ख्रीष्टो महायाजकत्वपदं ग्रहीतुं स्वीयगौरवं स्वयं
न कृतवान्। किन्तु 'त्वं मे पुत्त्रोसि चाद्य त्वां समुत्थापितवानहम्,' ५
एतादृशीं कथां यः कथयामास सएव तस्य गौरवं कृतवान्। इत्थम् ६
अन्यगीतेऽप्युक्तम् आस्ते 'मल्कीषेदक् मतात् त्वन्तु याजकोसि चिरन्तनः।'
अतो यो मृत्यो रक्षितुं समर्थः तस्य समीपे निजावतारसमये बहु- ७
क्रन्दनम् अश्रुपातञ्च कृत्वा विनयेन प्रार्थ्य यस्माद् अविभेत् तस्मान्
मुक्तोऽभवत्। अपरं तस्मिन् ईश्वरस्य पुत्त्रे सत्यपि दुःखभोगेनाज्ञाग्रहणं ८
अभ्यस्तवान्। इत्थं सिद्धः सन् निजाज्ञाग्राहिणाम् अनन्तपरित्राणस्य मूली- ९
भूतः सन् मल्कीषेदको मतानुसारत ईश्वरेण नियुक्तोमहायाजकत्वेन १०
विख्यातो भवति।

तस्मिन् ममानेकाः कथाः सन्ति किन्तु युष्माकं कर्णानां स्तब्धत्वात् ११
तत्प्रकाशनं दुष्करं भवति। यतो यस्मिन् समये शिक्षकत्वं युष्माकम् १२
उचितं तस्मिन् समये पुनरपि कोपि यद् युष्मान् ईश्वरराज्यस्य प्रथमसूत्रं
शिक्षयेत् तादृशं युष्माकं प्रयोजनम् आस्ते, तथा कठिनद्रव्यं नहि किन्तु दुग्धं
युष्माकं प्रयोजनम् आस्ते। अपरं दुग्धपोष्यो बालको बाल्यत्वाद् धर्म्मवाक्ये १३
निपुणो न भवति किन्तु ये बाल्यातिरिक्तवयस्का भवन्ति, अर्थात् ये १४
इन्द्रियाणाम् अभ्यासेन हिताहितं निर्णेतुम् अशिक्षन्त तेषां कठोरं द्रव्यं
भक्षणीयं भवति।

## ६ षष्ठोऽध्यायः।

१ धर्म्माधिकाभ्यासकरणार्थं विनयः ४ धर्म्मत्यागनिषेधः ९ धर्म्मे स्थिरीभवितुं विनयः, धर्म्मफलं दातुम् ईश्वरस्याङ्गीकारः शपथश्च।

१ वयं मृतिजनककर्म्मभ्यो मनःपरावर्त्तनम् ईश्वरे विश्वासो मज्जनशिक्षणं
२ हस्तार्पणं मृतलोकानाम् उत्थानम् अनन्तदण्डाज्ञैतैः पुन र्भित्तिमूलं न
स्थापयित्वा वरं ख्रीष्टवाक्यस्येदं प्रथमसूत्रं परित्यज्य शेषं यावद् अभ्यस्य
३ सिद्धा भवाम। ईश्वरो यदि कारयति तर्हि करिष्यामः।
४ ये एककृत्वो दीप्तिमया अभवन् तथा पवित्रेणात्मना सहभागिनः
सन्तः स्वर्गीयदानस्येश्वरीयोत्तमवाक्यस्य भविष्यत्कालिकशक्तेश्च रसम्
५ आस्वदन् ते यदि मनोभिः पुनरपीश्वरस्य पुत्रं क्रुशे हत्वा तं लज्जास्पदञ्च
६ कृत्वा पुनः पतिता भवन्ति, तर्हि पुनस्तेषां मनः परावर्त्तनार्थं नवीनी-
७ करणम् असाध्यं भवति। यतो या भूमिः स्वोपरि पुनः पतितवृष्टि-
जलेन सिक्ता सती कृषीवलानां कृते शाकम् उपयुक्तम् उत्पादयति
८ स ईश्वराद् आशिषं प्राप्नोति; किन्तु या भूमिः केवलं गोक्षुर-
कण्टकवृक्षान् उत्पादयति साऽग्राह्या शापग्रस्ता च सती शेषे दग्धा
भविष्यति।
९ हे प्रियतमाः, एतादृश्यां कथायां कथितायामपि वयं युष्माकं
१० कृते तस्या उत्तमासु त्राणसम्बन्धीयासु च कथासु विश्वसामः। यतो यूयं
पवित्रलोकानां यां सेवाम् अकार्ष्ट तथाद्यापि कुरुथ, तद्द्वारे-
श्वरस्य नाम्ने यद्यत् परिश्रमस्य प्रेम्नः क्रियां प्रकाशितवन्तः स तद् अन्या-
११ येन न विस्मरिष्यति। किन्तु यूयं शेषं यावत् प्रत्याशां सफलां कर्त्तुं
१२ बहु यतध्वं; अपरञ्च निरालस्याः सन्तो ये प्रत्ययेन चिरसहिष्णुतया
च प्रतिज्ञायाः फलाधिकारिणो भवन्ति तेषाम् अनुकारिणो भवेत
१३ वयमित्यभिलषामः। यत ईश्वर इब्राहीमं प्रति शपथं कर्त्तुं स्वीयनाम्नः
१४ किमपि गुरुतरं नामाप्राप्य स्वीयनाम्ना शपथं कुर्व्वन् कथयामास, अहम्
१५ अवश्यम् तुभ्यम् आशिषं दत्त्वा तव वंशं वर्द्धयिष्यामि। ततः स चिरं सहन-
१६ शीलो भूत्वा तस्याः प्रतिज्ञायाः फलं लब्धवान्। मानुषाः प्रमाणकारणाद्

विवादशमनार्थं श्रेष्ठतरं नाम गृह्णन्तः शपथं कुर्व्वन्ति। इतिहेतोस्तस्याः १७
प्रतिज्ञाया अधिकारिणः स्वीयमन्त्रणाया अमोघतां बाहुल्यतो दर्शयितुं
वाञ्छां कुर्व्वन् ईश्वरः शपथेन तां प्रतिज्ञां स्थिरीकृतवान्। अतएव यस्मिन्नीश्व- १८
रस्य वितथकथनम् अकर्त्तव्यम् एतादृशेन द्वयेनामोघकार्य्येणास्माकं
ऽग्रे स्थापितप्रत्याशायाः प्राप्तिनिमित्तं पलायमाना वयं सम्पूर्णां
सान्त्वनां लभामहे। सा प्रत्याशास्माकं मनसो लङ्गरः स यत्र मल्की- १९
षेदको मतानुसारतो नित्यं महायाजकः सन् यीशुरस्माकं कृते-
ऽग्रसरः सन् प्रविवेश तत्र विच्छेदकवसनस्याभ्यन्तरं प्रविश्य गाढं
स्थिरीकृतस्तिष्ठति।

---

७ सप्तमोऽध्यायः।

१ मल्कीषेदकथनं ख्रीष्टस्य महायाजकत्वं ११ हारोणादिसर्व्वयाजकेभ्यस्तस्य श्रेष्ठत्वञ्च।

प्रथमं धर्म्मराजः पश्चात् शालमो राजा, अर्थात् शान्ते राजा ख्यातो १
ऽपरं नृपतीनां मारणात् प्रत्यागतम् इब्राहीमं साक्षात्कृत्य तस्मा आशी- २
र्व्वादे कृते सति तस्मात् सर्व्वद्रव्याणां दशमांशं प्राप्तवान् एतादृशो यः
सर्व्वोपरिस्थस्येश्वरस्य याजकः शालमो राजा मल्कीषेदक् सोऽज्ञात- ३
पितामातृकोऽविदितवंशोऽविदितजन्ममृत्युः सन् ईश्वरपुत्रस्य सदृशी-
कृतो भूत्वा सर्व्वदा याजकोऽस्ति। अतएव विविच्य पश्यत यस्मा अस्माकं ४
पूर्व्वपुरुष इब्राहीम् लुठितद्रव्याणां दशमांशं ददौ स कीदृक्प्रधानजनः।
लेवेः सन्ताना याजकत्वपदं गृहीत्वा व्यवस्थानुसारेण लोकेभ्यः, अर्थाद् ५
इब्राहीमो जातेभ्यः, स्वीयभ्रातृभ्यो दशमांशं ग्रहीतुम् आदिष्टा अभवन्
किन्तु एष जनस्तेषां वंशमध्ये गणितो न भूत्वा इब्राहीमो दशमांशं ६
गृहीत्वा प्राप्तप्रतिज्ञं जनम् आशिषं जगाद। अपरञ्च क्षुद्रो जनो महता ७
लोकाद् आशिषं प्राप्नोति, इत्यत्र कोऽपि सन्देहो नास्ति। अपरम् इदानीं ८
ये जना दशमांशं गृह्णन्ति ते म्रियन्ते किन्तु तदानीं यो जनो दशमांशं

९ अपरञ्च स याजकः सन् अमरस्तिष्ठतीत्यस्य प्रमाणम् आस्ते। अपरञ्च
दशमांशं गृहीता लेविरिब्राहीमद्वारा दशमांशं प्रदत्तवान् एतदपि कथ-
१० यितुं शक्यते यतो यदा मल्कीषेदक् तस्य पितरं साक्षात् कृतवान्
तदानीं लेवि स्तस्यान्तरासीत्।
११ अपरं येन लोका व्यवस्थां लेभिरे तेन लेवीययाजकेन यदि मानवाः
सिद्धा भवितुम् अशक्ष्यन् तर्हि हारोणो मतानुसारेणाविख्यातस्य मल्कीषे-
१२ दको मतानुसाराद् विख्यातस्यापरैकयाजकस्योदये किं प्रयोजनम्
१३ आसीत्? यतो याजकत्वे विक्रते सति व्यवस्थाप्यवश्यं विकृता भवति। अपरञ्च
यं प्रति सा पूर्व्वोक्तिरास्ते स जनो यस्मिन् वंशे कोपि कदापि वेद्याः कर्म्म न
१४ कृतवान् एतादृशे वंशे जातवान्। वस्तुतस्तु याजकत्वकर्म्म प्रति मुसा यस्य
वंशस्य कथां कांस्चिदपि न कथयामास तस्मिन् यिहूदावंशेऽस्माकं
१५ प्रभुरवतीर्णवान् इति प्रसिद्धम् आस्ते। सांसारिकमतानुसारेण न भूत्वा
१६ मल्कीषेदको मतानुसारेण, अक्षयपरमायुषः शक्त्यनुसारेण च नियु-
१७ क्तान्य एको याजक उदेष्यति एषा कथा पुनः प्रसिद्धास्ते। यत ईश्वर
इदं साक्ष्यं दत्तवान् 'मल्कीषेदकः मतात् त्वन्तु याजकोसि चिरन्तनः'।
१८ दुर्ब्बलताया निरर्थकतायाश्च हेतोः तस्या अग्रवर्त्तिन्या व्यवस्थाया
१९ लोपोऽभवत्। यतो व्यवस्थया कोपि सिद्धो भवितुं न शक्नोति किन्तु
यद्द्वारा वयम् ईश्वरस्य समीपवर्त्तिनो भवाम एतादृश्या समुपस्थितया
२० श्रेष्ठप्रत्याशया भवितुं शक्नोति। अपरं शपथं विना यद्वद् यीशु
र्याजकत्वपदे नियुक्तो नाभवत् तद्वत् स श्रेष्ठनियमस्य मध्यस्थो भवति।
२१ यतोऽमी याजकाः शपथं विना याजकत्वपदे नियुक्ता अभवन् किन्तु त्वं
२२ मल्कीषेदको मतानुसारात् याजकः, यः परमेश्वर इमं शपथं चकार
स तस्यान्यथा न करिष्यति यस्तस्मै कथामेतां कथितवान् तस्यैतेन
२३ शपथेन ख्रीष्टो नियुक्तोऽभवत्। अपरञ्च नश्वरत्वात् चिरस्थायिनो भवितुं
२४ न शक्तास्ते तत एकस्मिन् पदे बहवो जना नियुक्ता अभवन् किन्त्वयं
यीशुरनन्तकालस्थायी तस्माद् अन्येषाम् अप्राप्यं याजकत्वं करोति।

अतएव ये तेनेश्वरशरणं गच्छन्ति तेषां कृते स निवेदयितुं सततं जीवि- २५
त्वात् सर्व्वथा तान् परित्रातुं समर्थो भवति। अपरञ्च पवित्रोऽहिंसको २६
निर्म्मलः पापिभ्यः पृथक् स्वर्गाद् उच्चीकृत एतादृश एको महायाजको-
ऽस्माकं प्रयोजनीय आसीत्। तेन महायाजकानामिव प्रथमं स्वस्य पाप- २७
कृते पश्चात् परेषां पापकारणात् प्रत्यहं बलिदाने तस्य प्रयोजनं नास्ति
यतः स स्वम् उत्सृज्य लोकानां निमित्तं तत् कर्म्म एककृत्व एव सम्पाद-
यत्। अपरञ्च व्यवस्था महायाजकत्वपदे ऽसिद्धमानुषं नियोजयति २८
किन्तु व्यवस्थातः परं यस्य कथासीत् सानन्तकालस्थायिनं तं सिद्धपुत्रं
नियोजयति।

---

## ८ अष्टमोऽध्यायः।

१ ख्रीष्टस्य महायाजकत्वपदेन हारोणो महायाजकत्वपदस्य लोपः सुसंवादस्य नवीननियमेन पुरातननियमस्य लोपश्च।

तस्याः पूर्व्वोक्तकथायास्तात्पर्य्यमेतत् स्वर्गे महामहिम्नः सिंहासनस्य १
दक्षिणपार्श्वे समुपविष्टो मनुजैरस्थापितोऽर्थात् परमेश्वरेण स्थापितः २
सत्यदूष्यस्य पवित्रस्थाने सेवाकर्म्मणि निविष्ट एतादृश एको महायाजको-
ऽस्माकं विद्यते। एकैको महायाजको यथा दानं बलिञ्चोत्स्रष्टुं नियुक्तो ३
विद्यते तथा तस्यापि किञ्चिद् उत्सर्जनीयं तिष्ठतीति प्रयोजनीयं आसीत्।
किन्तु स यदि पृथिव्याम् अस्थास्यत् तर्हि याजको नाभविष्यत् यस्माद् ये ४
जना व्यवस्थानुसारिदानादि समुत्सृज्य स्वर्गीयवस्तुनो दृष्टान्तेन छाया-
वस्तुना सेवन्ते एतादृशा याजकाः सन्ति। यद्वन् मूसा पवित्रदूष्यं निर्म्मातुम् ५
उद्यतः सन् ईश्वराद् उपदेशम् लब्धवान् वस्तुत ईश्वरस्तम् उवाच, पर्व्वते
त्वं यन्निदर्शनं दृष्टवान् तदनुसारेण निखिलं निर्म्माहि। किन्त्वस्माकं महा- ६
याजको यद्वद् उत्तमाङ्गीकारे स्थापितस्य श्रेष्ठनियमस्य मध्यस्थ आसीत्
इदानीं ततोऽप्यधिकं परमं सेवनपदं प्राप्तवान्। अपरं प्रथमनियमो यदि ७
निर्द्दोषोऽभविष्यत् तर्हि द्वितीयनियमकरणस्य किमपि प्रयोजनं नाभवि-
ष्यत्। किन्तु स तस्मिन् दोषम् आरोप्य कथयति, परमेश्वरेणोक्तम् इदम् ८

आस्ते' पश्य यस्मिन् समयेऽहं इस्रायेल्वंशयिहूदावंशाभ्यां सार्द्धम् एकं
८ नवीनं नियमं स्थिरीकरिष्यामि एतादृशः समय आगमिष्यति। परमे-
श्वरोऽपरमपि कथयति, अहं यस्मिन् काले तेषां पूर्व्वपुरुषाणां हस्तं
धृत्वा मिसरदेशाद् उद्धरन् तैः सह नियमं स्थिरीकृतवान, अपरं तेषां
मम नियमस्यामाननाद् अहं तान् प्रति मनो न निधत्तवान् तद्दिनस्य
१० व्यवस्थानुसारेण नहि। किन्तु परमेश्वरः कथयति, ततःपरम् अहम्
इस्रायेलीयवंशैः सार्द्धम् इमं नियमं स्थिरीकरिष्यामि, तेषां चित्तेषु
मम व्यवस्थां स्थापयिष्यामि, अन्तःकरणेषु तां लिखिष्यामि च, अपरं
११ अहं तेषाम् ईश्वरो भविष्यामि तेपि मम लोका भविष्यन्ति। अपरञ्च त्वं
परमेश्वरं जानीहि, एतां कथां कथयित्वा तेषाम् एकैको जनः स्वीयं स्वीयं
समीपवासिनं स्वीयं स्वीयं भ्रातरञ्च नोपदेक्ष्यति यतो वृद्धबालकवनिताः
१२ सर्व्वे मां ज्ञास्यन्ति। तेनाहं तेषां सर्व्वाणि दुष्कर्म्माणि क्षमित्वा तेषां
पापान्यपराधांश्च पुनः कदापि न स्मरिष्यामि। इत्थं स नूतननियमस्य
१३ कथां कथयित्वा प्रथमं पुरातनं कृतवान्; अतएव यत् पुरातनं जीर्णञ्च
तस्य लोपसमयो जायते।

---

९ नवमोऽध्यायः।

१ व्यवस्थाया बलिदानादिकथनं ११ एतेभ्यः सर्व्वेभ्यः ख्रीष्टीयबलिदानस्य श्रेष्ठत्वञ्च।

१ प्रथमं नियमानुसारत ईश्वरस्याराधनाव्यवस्था सांसारिकं पवित्रस्थान-
२ ञ्चासीत्। सज्जीकृतस्य दूष्यस्य यत्र प्रथमकोष्ठे प्रदीपपादपो भोजनासनं दर्श-
३ नीयपूपास्चासन् तत् कोष्ठं पवित्रमिति नाम्ना विख्यातम् अभवत्। द्वितीय-
विच्छेदवसनस्य पश्चात् महापवित्रमिति नामकं तस्य दूष्यस्य यद् द्वितीयं
४ कोष्ठं तन्मध्ये सुवर्णमयो धूपाधारः सुवर्णमण्डितो नियमकोषश्च तत्र
मान्नायाः सुवर्णघटो हारोणो मञ्जरितदण्डस्तक्षितनियमप्रस्तरौ तदु-
५ परिकरुणासनस्य छायाकारिणस्तेजोमया किरूवा आसन्, एतेषां विशे-
६ षतत्त्वकथनाय नायं समयः। एतेषु सज्जीभूतेषु याजका ईश्वरस्य सेवनं

कर्त्तुं दूष्यस्य प्रथमकोष्ठं सर्व्वदा प्राविशन् किन्तु द्वितीयकोष्टं महायाजक ७
एकाकी प्रतिवर्षम् एककृत्वः प्रविश्य स्वान्यजनाज्ञानकृतानां पापानां
निमित्तम् उत्सर्गार्थशोणितम् अनादाय न प्राविशत्। तस्मात् पवित्र ८
आत्मा एतमर्थं ज्ञापयति प्रथमदूष्ये तिष्ठति सति महापवित्रस्थानप्रवे-
शस्य पन्थाः प्रकाशितो न भवति। अपरञ्च सिद्धिकरणस्य कालं ९
यावत् व्यवस्थया निरूपितं केवलं विशेषखाद्यं पेयं नानाप्रकारमज्जनं
सांसारिकसेवनञ्चैतैः सार्द्धं यद्दानं बलिदानादि च साधकस्य मनः सिद्धं १०
कर्त्तुम् अशक्तानि तानि प्रथमदूष्ये उदसृज्यन्त तद्दूष्यं वर्त्तमानकालस्यैकम्
आदर्शस्वरूपम्।

ख्रीष्ट एतत्सृष्टे र्वहिर्भूतेनाहस्तकृतेन श्रेष्ठतमेन प्रसिद्धदूष्येण भावि- ११
मङ्गलानां महायाजकरूपेणावतीर्य्य गोवत्सानां छागानां वा शोणितेन
नहि किन्तु स्वीयशोणितेन सार्द्धम् अनन्तमुक्तिं प्राप्य एककृत्व एव १२
महापवित्रस्थानं प्रविष्टवान्। वृषछागानां शोणितस्य गवीभस्मनश्चाङ्ग- १३
प्रक्षेपाद् यद्यपवित्रलोकानां शरीराणि पवित्राणि भवन्ति तर्हि
नित्येनात्मना निर्दोषं स्वम् ईश्वरम् उद्दिश्य उदसृजत् यः ख्रीष्टः, तस्य १४
शोणितं मृत्युयोग्यक्रियाणाम् अमरेश्वरस्य सेवार्थं युष्माकं मनांसि ततो-
धिकपवित्राणि किं न करिष्यति? अपरम् यद् आहूतलोका प्रतिज्ञातम् १५
अनन्ताधिकारं प्राप्नुवन्ति तदर्थं स पूर्व्वीयनियमलङ्घनापराधमार्जनार्थं
मृत्युद्वारा नूतननियमस्य मध्यस्थो जातः। नियमं सिद्धं कर्त्तुं नियुक्तबले १६
र्मृत्युं घटयितुं प्रयोजनं विद्यते। अपरं नियुक्तबलौ जीवति सति नियमो १७
न सिद्ध्यति किन्तु बलौ मृते सति स स्थिरीभवति। तस्मात् स पूर्व्वनियमो १८
शोणितपातं विना नासिद्ध्यत्। किन्तु मुसा लोकान् प्रति व्यवस्थानुसारेण १९
सर्व्वा आज्ञाः प्रकाश्य जलेन सिन्दूरवर्णलोम्ना एषोवा च सार्द्धं गोव-
त्सानां छागानां च शोणितं गृहीत्वा पुस्तके सर्व्वलोकानां गात्रेषु च प्रक्षिप्य
कथयामास, 'युष्माकं निमित्तम् ईश्वरो यं नियमं निरूपितवान् एतत् २०
तस्य शोणितम्'। अपरं दूष्ये सेवनपात्रे च तत्प्रकारेण शोणितं प्रक्षिप्तवान्। २१

२२ अपरं व्यवस्थानुसारेण प्रायशः सर्व्वं वस्तु शोणितेन परिष्कृतम् अभवत्
२३ अपरञ्च शोणितपातं विना पापमोचनं न भवति। एतत्कारणात् स्वर्गीय-
पवित्रस्थानस्य दृष्टान्तो यत् पवित्रस्थानं तद् एतैः सर्व्वै र्यागैः परिष्कृतं
भवति किन्तु स्वर्गीयपवित्रस्थानस्य एतेभ्यः श्रेष्ठबलिना परिष्करणं उचि-
२४ तम्। अतएव ख्रीष्टो हस्तकृतस्य सत्यस्य पवित्रस्थानस्य दृष्टान्तस्वरूप-
महापवित्रस्थानं न प्रविश्य, इदानीम् अस्मन्निमित्तम् ईश्वरस्य साक्षात्
२५ स्थातुं स्वयं स्वर्गमेव प्रविष्टवान्। किन्तु महायाजकः प्रतिवत्सरं परस्य
शोणितम् आदाय यद्वन् महापवित्रस्थानं प्रविशति तद्वत् पुनः पुनः स्वम्
उत्स्रष्टुं ख्रीष्टस्य प्रयोजनं नास्ति यतस्तस्मिन् सति सृष्टेः प्रथमम् आरभ्य
२६ बहुवारं तस्य मृत्युरभविष्यत्। किन्त्विदानीं स पापबलिसमापनार्थं स्वं
२७ बलिमिवैककृत्व उत्स्रष्टुं युगस्य शेषकालेऽवतीर्णवान्। अपरं यथा मानुषस्य
एककृत्वो मरणं तत्पश्चाद् विचारो निरूपितोऽस्ति तद्नुसारेण ख्रीष्टोऽपि
२८ बहूनां पापवहनार्थम् एककृत्व उत्सृष्टोऽभवत्, अपरं बलिरिव पुन र्न
भूत्वा ये तदपेक्षां कुर्व्वन्ति तेषां परित्राणार्थं द्वि र्दर्शनं दास्यति।

---

१० दशमोऽध्यायः।

१ व्यवस्थानुयायिबलिदानेन सर्व्वथा पापमोचनाभावः ५ ख्रीष्टस्य बलिदानेन सर्व्वथा पापमोचनं ११ तस्य बलिदानस्यैकत्वं सम्पूर्णत्वञ्च १९ तेन तदीयलोकानामक्षोभः २६ धर्म्मत्यागनिषेधः ३२ धर्म्मार्थं दुःखभोगसहनप्रशंसा च।

१ व्यवस्था भविष्यन्मङ्गलानां मूर्त्ति र्न भूत्वा छायास्वरूपत्वान्नित्यवार्षिकबलि-
२ दानैः शरणागतलोकान् सिद्धान् कर्त्तुं समर्था न भवति। यतः साधकेषु
एककृत्व एव परिष्कृतेषु सत्सु पुनरपि तेषां कस्यापि पापस्य बोधाभावात्
३ ते किं तस्माद् उत्सर्गकर्म्मणो न न्यवर्त्तिष्यन्त? किन्तु तै र्बलिदानैः प्रति-
४ वत्सरं पापस्मरणं जातम्। अतएव वृषाणां वा छागानां शोणितेन पापमोचनं
न सम्भवति।

५ एतत्कारणात् ख्रीष्टो जगत्यवतीर्य्य कथितवान् हे ईश्वर,

'न बलिं नैव नैवेद्यं त्वमिच्छसि कदाचन।
तयो र्विना त्वया मे तु सञ्जीकृतं कलेवरं।

६ होमस्त्वं पापराधार्थं बलिञ्च न प्रवाञ्छसि।
अकथयं तदैवाहं पश्यागच्छाम्यहञ्च वै।
लिखितं मच्चरित्रञ्च विद्यते धर्म्मपुस्तके।
७ तवेष्टकर्म्म कर्त्तुं मे सन्तोषो भवतीश्वर।
त्वदीया च व्यवस्था मे हन्मध्ये विद्यते सदा।'

हे ईश्वर व्यवस्थानुरूपोत्सृष्टबलौ नैवेद्ये होमे पापार्थबलिदाने च तवातुष्ट- ८
त्वात् तानि नेच्छसि, पूर्व्वं स यदा कथामेतां कथितवान् तदा पुनरवदत् हे ९
ईश्वर त्वदीयेच्छां पालयितुम् अहम् आगच्छामि, इति कथयित्वा स
नवीनां व्यवस्थां स्थिरीकर्त्तुं पूर्व्वीयां व्यवस्थां लुप्तवान्। अतएव तस्य १०
तदिच्छातः ख्रीष्टेन स्वशरीरस्यैककृत्व उत्सर्गाच्च वयं पवित्रीकृता अभवाम।

एकैको याजकः प्रतिदिनम् उपासनां कुर्व्वन् पापमोचनार्थम् असम- ११
र्थान् बलीन् उत्स्रष्टुं दण्डायमानो भवति किन्तु ख्रीष्टः सदाकालं पाप- १२
मोचनार्थम् एकं बलिम् उत्सृज्येश्वरस्य दक्षिण उपविश्य शत्रवो यावत् १३
तस्य पादपीठानि न भवन्ति तावद् कालम् अपेक्षते। एकेनोत्सर्गेणैव १४
स पवित्रीकृतलोकान् अनन्तकालार्थं सिद्धान् करोति। अपरम् एतदर्थम् १५
अस्मान् प्रति पवित्र आत्मा स्वयं साक्ष्यं ददाति, अन्यकथातः परम् इदं
लिखितम् आस्ते, परमेश्वरः कथयति

१६ 'तेषां चित्ते लिखिष्यामि व्यवस्थां विनिधाय वै।
तेषां पापापराधौ च स्मरिष्यामि पुन र्नहि।
१७ नियमं सह तैरेव निर्णेष्यामि ततः परम्।'

अतएव यत्र पापमोचनं भवति तत्र पापकारणात् पुनरुत्सर्गस्य प्रयोजनं १८
न तिष्ठति।

हे भ्रातरः ख्रीष्टो विच्छेदवसनस्वशरीरेणास्मन्निमित्तं नवीन- १९
जीवनदायकं पन्थानमेकं निर्म्मितवान् तेन तस्य शोणितद्वारा मंहा- २०
पवित्रस्थानं प्रवेष्टुम् अस्माकम् अक्षोभो विद्यते। अपरम् ईश्वरस्य परिजनो- २१

२२ परि ख्रीष्टोऽस्माकं महायाजक आस्ते। अतएव वयं पापबोधं प्रति प्रक्षा-
लितान्तःकरणेन निर्म्मलजलेन धौतशरीरा भूत्वा सरलान्तःकरणैरीश्वरं
२३ सेवामहै। अपरञ्च यः प्रतिज्ञातवान् स विश्वास्यः,तस्मात् प्रत्याशाया यद्
२४ वाक्यं वयम् अङ्गीकृतवन्तः,तदेव गाढं धारयामहै तथा प्रेम्नि सत्क्रियासु
२५ च प्रवर्त्तितुं परस्परं मन्त्रयामहै। अपरं कतिपयलोका इव सभाकरणं न
परित्यज्य प्रभो र्दिवसं यावत् समीपवर्त्तिनं पश्यामस्तावत् उपदिशाम।
२६ सत्यधर्म्मस्य ज्ञाने प्राप्ते सति वयं यदि पुनरपि स्वेच्छया तत्त्यागपापं
२७ कुर्म्मः तर्हि तत्पापस्य पुनः किमपि प्रायश्चित्तं न तिष्ठति केवलं रिपु-
२८ नाशककोधदहनस्य दण्डस्य च भयजनकापेक्षा तिष्ठति। मुसाव्यवस्थाया-
स्तुच्छीकरणान् मानुषा यदि द्वाभ्यां त्रिभि र्वा साक्षिभि र्निर्दयत्वेन
२९ हता अभवन् तर्हि बुध्यध्वं यो जन ईश्वरस्य पुत्त्रम् अवजानाति, नियमस्य
यच्छोणितेन पवित्रीकृतोऽभवत् तद् अपवित्रं जानाति, अनुग्रहकरम्
आत्मानम् अपमन्यते च, स कियन्महाघोरतरदण्डस्य योग्यो भविष्यति?
३० यतः परमेश्वरः कथयति,

'ममैव दण्डनं कर्म्म दानं प्रतिफलस्य च।'

पुनरपि 'परेशः स्वीयलोकेभ्यः प्रतिफलं प्रदास्यति।'

३१ इमां कथां यः कथितवान् तं वयं जानीमः। अमरेश्वरस्य हस्ते पतनं
महाभयानकं।

३२ हे भ्रातरः पूर्व्वं यूयं यदा दीप्तिविशिष्टाः सन्तो दुःखस्य संग्रामं
३३ सहमाना अंशक्रमेण निन्दायां क्लेशे च कौतुकीकृता अभवत, अपरम्
३४ अंशक्रमेण तादृशनिन्दितलोकानां सखाय आसत तद्दिनानि स्मरत। यूयं
मदीयबन्धनस्य दुःखेन दुःखिनो जाताः, स्वर्गे युष्माकम् अपरमण्युत्तमं
नित्यं धनमास्ते इति विदित्वानन्दात् स्वीयस्वीयद्रव्याणां लुण्टनम् असह-
३५ ध्वम्। अतएव बहुपुरस्कारयुक्तं युष्माकम् अक्षोभं न परित्यजत। यतो
३६ यूयं येनेश्वरेच्छां पालयित्वा प्रतिज्ञातफलं प्राप्नुयात तादृशं धैर्य्यावलम्बनं
३७ युष्माभिरवश्यकर्त्तव्यम्। य आगमिष्यन् स स्वल्पदिनादेवागमिष्यति न

विलम्बं करिष्यति। विश्वासद्वारैव पुण्यवान् जनो जीविष्यति किन्तु यदि ३८
धर्म्मत्यागं करोति तर्हि तेनेश्वरस्यात्मा न सन्तुष्यति। किन्तु वयं विनाश- ३९
पर्य्यन्तं धर्म्मत्यागिनां सदृशा न भूत्वा आत्मनः परित्राणं यावद्
विश्वासिन इव भवामः।

---

११ एकादशोऽध्यायः।

१ प्रत्ययस्य निर्णयः बहुदृष्टान्तैस्तत्फलस्य निर्णयः ३२ विश्वासेन यद् आश्चर्य्यकर्म्म दुःखभोगश्चाभवत् तस्य निर्णयश्च।

प्रत्ययः प्रत्याशितानां निश्चयः, अप्रत्यक्षाणां प्रमाणदाता भवति। १
तेन प्रत्ययेन प्राञ्चो लोकाः सुख्यातिं प्राप्तवन्तः। अपरम् ईश्वरस्य २
वाक्येन जगद् असृज्यत किन्तु कस्माच्चित् प्रत्यक्षवस्तुन एतानि दृष्टवस्तूनि ३
नासृज्यन्त, एतद् वयं प्रत्ययेन ज्ञातवन्तः। हाबिल् प्रत्ययेन काबिलोपी- ४
श्वरम् उद्दिश्य श्रेष्ठम् बलिम् उत्सृज्य तस्य तद्दानं प्रतीश्वरस्य साक्ष्यद्वारा
स्वयं धार्म्मिक इत्यस्य प्रमाणं लब्धवान् एतत्कारणात् स मृतोऽप्यद्य यावत्
कथां कथयति। अपरं हनोक् प्रत्ययेन मृत्युम् अनास्वाद्य तिरोदधे, ५
ईश्वरेण तस्मिन् अन्तर्द्धापिते सति केनापि तस्योद्देशो न प्रापि; अपरम्
अन्तर्द्धानात् पूर्व्वं तेन यद् ईश्वरस्य सन्तोषो जनयाञ्चक्रे तस्य प्रमाणम्
आसीत्। किन्तु प्रत्ययं विनेश्वरस्य तोषोऽसाध्यः, ईश्वरो यद् वर्त्तमानः ६
स्वान्वेषकारिभ्यः पारितोषिकं ददातीति कथायाम् ईश्वरशरणागतानां
लोकानां प्रत्ययः कर्त्तव्यः। अपरञ्च नोहः प्रत्ययेनाप्रत्यक्षघटनेभ्य ईश्वरेण ७
प्रत्यादिष्टः सन् भयार्त्तो भूत्वा निजपरिजनानां रक्षार्थम् एकं पोतं
निर्म्मितवान् तेन स जगज्जनानां दोषान् दर्शितवान् प्रत्ययजातपुण्यस्याधि-
कारी बभूव। अपरम् इब्राहीम् प्राप्तव्याधिकारस्थानं प्रति यात्रां कर्त्तुम् ८
आहूतः सन् प्रत्ययेनाज्ञाग्राही जातोऽहं क्व यामीति न विज्ञायापि
यात्रां कृतवान्। अपरञ्च प्रत्ययेन प्रतिज्ञायाः फलाधिकारी य इस्हाक् ९
याकूब् च एताभ्यां सार्द्धं दूष्ये स्थित्वा विदेशवत् प्रतिज्ञातदेशे प्रोवास।

१० यस्माद् ईश्वरेण निर्म्मितं रचितं भित्तिमूलयुक्तं नगरम् अपेच्य स्थित-
११ वान्। अपरञ्च सारा प्रतिज्ञाकारिणं विश्वास्यं विज्ञाय रजोनिवृत्ता सत्या-
१२ मपि प्रत्ययेन गर्ब्भधारणशक्तिं प्राप्य पुत्त्रं प्रसुसुवे। इतिहेतो र्मृत-
कल्पाद् एकजनाद् आकाशीयनक्षत्राणीव समुद्रतीरस्थाः सिकता इवासंख्या
१३ लोका उत्पेदिरे। ते प्रथमं प्रतिज्ञातं फलं न प्रापुः किन्तु दूरात् तत्
विलोक्य विश्वासित्वाद् ग्रहणाकाङ्क्षित्वात् संसारेऽपरिचितान् विदेशिनः
१४ स्वान् अङ्गीकृत्य प्रत्ययेन प्राणान् तत्यजुः। ये जना एतादृक् स्वीकुर्व्वन्ति
१५ वयं स्वीयं देशम् मृगयामहे ते कथामिमां स्पष्टं कथयन्ति। अपरञ्च ते यं
देशं परित्यज्यागतवन्तस्तं चेद् अस्मरिष्यन् तर्हि तद्देशप्रत्यागमनस्य सुयो-
१६ गम् अवश्यम् अलप्स्यन्त। किन्तु तदानीं ते सर्व्वोत्कृष्टदेशस्य, अर्थात् स्वर्गीय-
देशस्य प्रत्याशिन आसन् एतस्माद् ईश्वरस्तेषाम् ईश्वरत्वेन विख्यातो भवि-
१७ तुं न लज्जते यतः स तेषां कृते नगरमेकं स्थापयामास। अपरम् इब्राहीम्
परीक्षितः सन् प्रत्ययेन इस्हाकम् उत्ससर्ज वस्तुत इस्हाका तव वंशो
१८ विख्यातो भविष्यति तेनेति प्रतिज्ञायां प्राप्तायां सत्यां यम् प्रतीत्थं प्रोक्तम्
१९ आसीत् तम् अद्वितीयं पुत्त्रम् इस्हाकम् उत्ससर्ज। यत ईश्वरस्तं मृतेभ्य
उत्थापयितुं समर्थ इति विवेद तथा दृष्टान्तार्थं मृतेभ्यस्तं जग्राह।
२० अपरम् इस्हाक् प्रत्ययेन याकुबम् एषौनामानञ्च प्रति भविष्यदा-
२१ शिषं जगाद। अपरं याकुब् स्वमरणकाले प्रत्ययेन युषफः पुत्त्रद्वयाय
२२ आशिषं दत्तवान्। ततो युषफ् प्रत्ययेन चरमकाले इस्रायेलः सन्तानान्
२३ मिसरदेशाद् यात्रायाः कथां कथयित्वा स्वास्थिषु समादिदेश। अपरं
मुसे भूमिष्ठे सति परमसुन्दरत्वस्य दृष्टत्वात् तस्य पितरौ नृपतेरादेशाद्
२४ अभीत्वा प्रत्ययेन तं त्रीन् मासान् यावत् गोपयित्वा ररक्षतुः। ततः
परं स सवयस्कः सन् पारितोषिकदानं दृष्ट्वा पापजातक्षणिकसुखभोगाद्
२५ ईश्वरस्य लोकैः सार्द्धं दुःखभोगं मनोनीतं चकार। तथा मिसरदेशीयायाः
२६ समस्तसम्पत्तेः ख्रीष्टनिमित्तनिन्दितत्वं भद्रं विज्ञाय प्रत्ययेन फिरौन्-
२७ राजस्य दौहित्रत्वेन विख्यातो भवितुं नाङ्गीचकार। अनन्तरं सोऽदृश्यमेव

दृश्यं विदित्वा धैर्य्यम् अवलम्ब्य राज्ञः क्रोधात् न भीत्वा प्रत्ययेन मिसर-
देशं परितत्याज। अपरं प्रथमजातानां विनाशकः स्वीयलोकान् यन्न २८
स्पृशेत तदर्थं स प्रत्ययेन निस्तारनामकोत्सवं शोणितप्रक्षेपविधिञ्च निरू-
पयामास। अपरञ्च ते प्रत्ययेन शुष्कभूमौ गमनवत् सुफ्सागरस्य मध्येन २९
जग्मुः किन्तु मिसरीया लोकास्तद्वत् कर्त्तुम् उद्यम्य मग्ना अभवन्। अपरञ्च ३०
प्रत्ययेन सप्त दिनानि यावद् यिरीहोनगरस्य प्राचीरस्य प्रदक्षिणीकरणात्
तत् प्राचीरं पपात। तथा राहव्नामिका वेश्या प्रत्ययेन चाराणां ३१
प्रीत्यातिथ्यकरणाद् अविश्वासिभिः सार्द्धं न विननाश।

अधिकं किं कथयिष्यामि? गिदियोन् बारक् शिम्शोन् यिफ्ताह् ३२
दायूद् शिमूयेल् भविष्यद्वादिन एतेषां सर्व्वेषां वृत्तान्तकथनं बहुकाले-
नापि मम साध्यं न भवति। ते प्रत्ययेन राज्यं पराजितवन्तस्तथा धर्म्म- ३३
कर्म्माणि कृत्वा प्रतिज्ञातफलं लेभिरे। अपरं सिंहस्य मुखबन्धं वह्ने र्दाहिकां ३४
शक्तिञ्च लुलुपुः, खड्गधारां त्याजयामासुः, निर्ब्बलतायाः सबला बभूवुः,
युद्धं जित्वा विपक्षाणां सैन्यानि परासुः। अपरं योषित उत्थानेन स्वीय- ३५
स्वीयबालकान् सजीवान् लेभिरे किन्तु बहवः श्रेष्ठतरोत्थानप्राप्तिर्निमित्तं
रक्षाया अग्रहणात् प्रहारतो यातनां बुभुजे। अपरम् इतरे तिरस्कारैः ३६
प्रहारैः बन्धनैः कारया च परीक्षिता बभूवुः। अपरे केचित् प्रस्तरा- ३७
घातेन हताः केचिच्च कर्त्तन्या द्विखण्डाः परीक्षिताः खड्गेन नष्टा मेषाणां
छागानाञ्च चर्म्मणाच्छादिता दीनाः क्लिष्टास्ताडिताश्च सन्तो विपिनेषु
पर्व्वतेषु पर्व्वगुहासु पृथिव्या गह्वरेषु च भ्रमितुम् आरब्धाः, एष संसार- ३८
स्तेषां योग्यो नाभवत्। एतैः सर्व्वैः प्रत्ययेन सुख्यातिःप्रापि किन्तु प्रतिज्ञातं ३९
फलं नापि। यतस्ते यद् अस्मान् विना सिद्धा न भवेयुः, तदर्थम् ईश्वरे- ४०
णास्मदर्थं श्रेष्ठतरं किमपि सञ्जितं द्रव्यं पूर्व्वतोऽस्थापि।

## १२ द्वादशोऽध्यायः।

१ विश्वासे दुःखभोगे धर्म्मे च स्थिरत्वं १२ धर्म्मत्यागे सावधानत्वं १८ व्यवस्थाया मङ्गलात् सुसंवादस्य मङ्गलं महत् २५ सुसंवादेऽवश्यस्थिरत्वञ्च।

१ वयम् एतावत्साक्षिमेघै र्वेष्टिताः सन्त एकैकं भारम् अनायासेन भ्रम-
जनकं पापञ्च परित्यज्य धैर्य्यम् अवलम्ब्यास्माकं गमनाय निरूपिते मार्गे
२ धावामैह। अपरं तस्य सम्मुखस्थितानन्दस्य प्राप्त्यर्थं हेतोः क्रुशस्य यातनां भुक्त्वा
योऽपमानं तुच्छीकृतवान् साम्प्रतम् ईश्वरस्य सिंहासनस्य दक्षिणपार्श्वे उपा-
विशत् तादृशो योऽस्माकं धर्म्मस्यादिकर्त्ता सिद्धिदाता च यीशुस्तं लक्ष्यं
३ करवाम। अपरञ्च यूयं यत् स्वीयस्वीयमनःसु श्रान्ताः क्लान्ताश्च न भवेत
तदर्थं यः पापिभिः स्वविरुद्धम् एतादृशं वैपरीत्यं सोढवान् तं स्मरत।
४ यूयं पापस्य विरुद्धं युद्धं कुर्व्वन्तः शोणितव्ययं यावत् कदापि प्रतिरोधं
५ नाकुरुत। अपरं पुत्त्रान् प्रतीव युष्मान् प्रति य उपदेश उक्त आस्ते तं किं
विस्मृतवन्तः?

६ 'परेशदत्तशास्तिं त्वं मा तुच्छीकुरु हे सुत।
तेन निर्भर्त्सितश्चापि नैव क्लान्तो भवात्मज।
परेशः प्रीयते यस्मिन् तस्मै शास्तिं ददाति यत्।
यन्तु पुत्त्रं स गृह्णाति तमेव प्रहरत्यपि।'

७ अतएव यदि यूयं शास्तिं सहध्वं तर्हीश्वरः पुत्त्रैरिव युष्माभिः सार्द्धं व्यव-
८ हरति यतः पिता यस्मै शास्तिं न प्रददाति तादृशः पुत्त्रः कः? किन्तु यस्याः
शास्त्यां सर्व्वेषाम् अधिकारोऽस्ति सा यदि युष्माकं न भवति तर्हि यूयं पुत्त्रा
९ न भूत्वा नितान्तं जारजा आध्वे। वयं यदि स्वेषां शारीरिकशास्तिकारिणः
पितॄन् सम्मानितवन्तः, तर्हि किं ततोधिकं स्वेषाम् आत्मनां पितुर्वशीभूय
१० न जीविष्यामः। तेऽल्पदिनेभ्यः स्वस्वाभिमतानुसारेण शास्तिं कृतवन्तः
किन्तु सोऽस्माकं हिताय स्वीयपवित्रताया अधिकारिणः कर्त्तुम्
११ अस्मान् शास्ति। शास्ति र्वर्त्तमानसमये कमप्यानन्दं न जनयति किन्तु
दुःखमेव जनयति तथापि पश्चात् शिक्षितलोकेभ्यः शान्तिदायकं
धर्म्मफलं ददाति।

अतएव यूयं पतितहस्तान् दुर्ब्बलानि जानूनि च सबलानि कुरुत येन १२
च दुर्ब्बलस्य सन्धिस्थानं न भज्येत स्वस्थं तिष्ठेत् चरणार्थम् एतादृशं सरलं १३
पन्थानं कुरुत। अपरञ्च सर्व्वैः सार्द्धं मेलनं यच्च विना कोपि परमेश्वरं १४
द्रष्टुं न शक्ष्यति तादृशं पवित्रत्वं चेष्टध्वं। यथा कश्चिद् ईश्वरस्यानु- १५
ग्रहात् न पतति यथा तिक्तताया मूलम् उत्पद्य कंष्ट न ददाति तेन च बहवो
ऽपवित्रा भवन्ति यथा च कश्चित् लम्पटो वा एक वारभोजनार्थं स्वीय- १६
ज्येष्ठभागविक्रेता य एषौस्तद्वद् अधर्म्माचारी न भवति तन्निमित्तं
सावधाना भवत। यत एषौराशीर्व्वादाधिकारी भवितुं प्रार्थनां कृत्वापि १७
ग्राह्यो न बभूव तथा सजलनयनेन चेष्टां कृत्वापि पितुर्मनः परावर्त्त-
यितुम् उपायं न लेभे, इति यूयं जानीथ।

अपरञ्च स्पृश्यः पर्व्वतः प्रज्वलितो वह्निः कृष्णवर्णो मेघोऽन्धकारो १८
झञ्झा तूरीवाद्यञ्च यस्य च वाक्यस्य शब्दं श्रुत्वा श्रोतारः कम्पिताः सन्तो
यद् एतादृशो रवः पुन र्न जायते प्रार्थनामेतां कृतवन्त एतेषां सन्निधौ १९
यूयम् नागच्छथ। त आज्ञां सोढुं नाशक्नुवन् अपरं यदि कश्चिद् २०
पशुः पर्व्वतं स्पृशति तर्हि स प्रस्तराघातेन वा शूलेन हन्यते। अपरञ्च तद् २१
दर्शनं तादृग् भयङ्करं यन् मुसा कथयामास, अहम् अतीवबिभेमि कम्पे
च। किन्तु सीयोन्पर्व्वतोऽमरेश्वरस्य नगरम् अर्थात् स्वर्गीययिरूशालम् २२
अयुतानि दिव्यदूताः, स्वर्गे लिखिता प्रथमजातानां महासभा, समाजो
जगतो विचारयिता ईश्वरः, सिद्धलोकानाम् आत्मानः, नूतननियमस्य २३
मध्यस्थो यीशुः, अपरं हाबिलो रक्तादपि मङ्गलदायकं प्रोक्षणस्य रक्तम् २४
एतेषां समीपं यूयम् आगच्छथ।

अवधत्त यूयम् उपदेशकं नावाज्ञासिष्ट यतो यदि लोका पृथिवीस्थम् २५
उपदेशकम् अवज्ञाय नाजीवन् तर्हि स्वर्गीयोपदेशकात् पराङ्मुखीभूय वयं
केनापि प्रकारेण जीविष्यामः ? तदा तस्य रवात् पृथिवी प्राकम्पत २६
किन्त्विदानीं स इमां प्रतिज्ञां कृतवान् अहं पुनरेककृत्वः पृथिवीं कम्पयि-
ष्यामि तत् केवलं नहि गगणमपि कम्पयिष्यामि। एककृत्वः शब्दस्य २७

तात्पर्य्यमिदम् एतेषु कृतवस्तुवत् कम्पितेषु वस्तुषु स्थानान्तरीकृतेषु सत्सु
२८ यान्यकम्पनीयानि तानि स्थास्यन्ति। अतएव वयम् अकम्पनीयं राज्यं प्राप्य
येन भयाद् भक्त्या च याह्यत्वेनेश्वरं सेवितुं शक्नुमः, तादृशोऽनुग्रहो ऽस्माभि
२९ भूयात्। यतो ऽस्माकम् ईश्वरः संहारकवह्निः

---

१३ त्रयोदशोऽध्यायः।

१ भ्रातरि प्रेमादेः कथनं ९ नीमाशिक्षाभिश्चालितत्वनिषेधः १७ शिक्षकाणां माननकथनं २० मङ्गलप्रार्थना २२ वार्त्तानमस्कारप्रेषणञ्च।

१ भ्रातृषु प्रेम तिष्ठतु आतिथ्याचरणं मा व्यस्मार्ष्ट यतः कश्चित् कश्चिन्
२ न विज्ञाय दिव्यदूतगणानामप्यातिथ्यम् अकरोत्। अपरं यूयं सह-
३ वन्दिन एव वन्दिनः स्मरत तथा यूयं देहविशिष्टा इव दुःखिलोकान्
४ स्मरत। अपरञ्च विवाहः सर्व्वेषां समीपे सत्कारदायकः, तस्य शय्या च
शुचिः किन्तु यः कश्चिद् व्यभिचारी पारदारिकस्तमीश्वरो दण्डयिष्यति।
५ यूयं लोभहीना आचारिणः सन्तो वर्त्तमानप्राप्तद्रव्येण सन्तुष्यत यस्माद्
६ ईश्वर एतादृक् कथितवान् अहं त्वां कदापि न त्यक्ष्यामि। अतएव

'स पक्षोऽस्ति परेशो मे न कस्मादपि मे भयं।
मनुष्यो मम किं कर्त्तुं समर्थो भवति ध्रुवं।'

७ वयम् अक्षोभा इति कथयितुं शक्नुमः। युष्माकं ये उपदेशका युष्माकं समीप
ईश्वरस्य वाक्यं प्रचारितं तान् स्मृत्वा तेषाम् आचारस्याभिप्रायं विदित्वा
८ तेषां प्रत्ययस्यानुगामिनो भवत। यीशुख्रीष्टः श्वोऽद्य सर्व्वदा च समभा-
वेनास्ते।

९ यूयं नाना नूतनशिक्षाभि र्विचालिता न भवत यत उत्सर्गकर्त्ता लाभ-
शून्यखाद्यविशेषेण नहि किन्त्वनुग्रहेणान्तःकरणसुस्थिरत्वम् उत्तमम्।
१० यद् वेद्या द्रव्यं दूष्यस्थितानां सेवकानां भोजनाय नोचितम् तादृशी यज्ञ-
११ वेद्येकास्माकम् आस्ते। अपरं पापमोचनार्थं येषां पशूनां शोणितं महा-
याजकेन महापवित्रस्थानम् आनीयते तेषां शरीराणि शिविराद् वहि
१२ र्दह्यन्ते। अतएव यीशुः स्वीयशोणितेन लोकान् पवित्रीकर्त्तुं नगरस्य

द्वारस्य वहि र्मृतिं भुक्तवान्। इतिहेतो र्वयं तत्कारणाद् अपमानं परिसह्य १३
शिविराद् वहिस्तस्य समीपं गच्छाम। यतोत्रास्माकं कस्यचित् चिर- १४
स्थायिनगरस्याभावाद् एकं भाविनगरं चेष्टामहे। अतएव तद्द्वारा सर्व्वदा १५
वयम् ईश्वरस्य प्रशंसायज्ञम् अर्थात् तदीयं नाम स्वीकृत्य रदनच्छदयोः
फलम् उत्सृजामहै। अपरञ्च परोपकारं दानञ्च कर्त्तुं न विस्मरत यत एष १६
यज्ञ ईश्वरस्य सन्तोषजनकः।

अपरं यूयं युष्माकम् उपदेशकान् सम्मन्य तेषाम् आज्ञाया वशीभवत यतो १७
यै र्निर्णयो दातव्यस्तादृशा लोकाइव ते युष्माकं प्राणरक्षणार्थं सचे-
तनास्तिष्ठन्ति तेन ते दुःखिता न भूत्वानन्देन तत् कर्म्म सम्पादयिष्यन्ति
यच्च दुःखे युष्माकं कोपि लाभो नास्ति। अपरञ्च यूयम् अस्मन्निमित्तं १८
प्रार्थयध्व वयम् उत्तममनोविशिष्टाः सन्तः सर्व्वत्र सदाचरणं कर्त्तुं प्रयासं
कुर्म्म इति निश्चितं जानीमः। किन्तु त्वरया यथा युष्माकं समीपे १९
समर्पितो भवामीति प्रार्थयितुं युष्मान् पुनरधिकं विनये।

यः शान्तिदायक ईश्वरः प्रधानमेषपालकम् अर्थात् अस्माकं प्रभुं २०
यीशुख्रीष्टं मृतानां मध्याद् आनीतवान् स चिरस्थायिनियमस्य शोणि-
तेन स्वेच्छां पूर्णां कर्त्तुं युष्मान् सर्व्वसत्क्रियाभिः सिद्धान् करोतु। अपरं २१
यानि कर्म्माणि तस्य दृष्ट्या ग्राह्याणि तानि युष्माकं मध्ये यीशुख्रीष्टेन
सम्पन्नानि करोतु तस्मै महिमा सर्व्वदा भूयात्। तथास्तु।

हे भ्रातरः संक्षेपेणाहं युष्मान् प्रति पत्रम् अलिखं यूयं मयोपदिष्ट- २२
कथायां मनो निधत्त युष्मान् प्रति विनये। अस्माकं भ्राता तिमथिः २३
स्थानान्तरं गतवान् एतां वार्त्तां यूयं वेदिष्यथ। स यदि त्वरया समा- २४
गच्छति तर्हि तेन सार्द्धं गत्वा युष्मान् साक्षात् करिष्यामि। यूय स्वीयं
स्वीयं सर्व्वमुपदेशकं पवित्रलोकांश्च नमत। अपरम् इतालियादेशीय- २५
लोकानां नमस्कारं ज्ञापय युष्मान् प्रत्यनुग्रहो भूयात्।

# याकुबः सर्व्वसाधारणपत्रम्।



## १ प्रथमोध्यायः।

१ मङ्गलाचरणं २ दुःखेऽप्याह्लादनं ५ ईश्वराद् धैर्य्ययाचनं ९ धने ऽभिमाननिषेधः १२ ईश्वरस्य पापमूलत्वं नहि किन्तु सर्व्वस्य मङ्गलस्य मूलत्वं २१ काल्पनिकताया विरुद्धा कथा च।

१ याकुब्नामक ईश्वरस्य प्रभो र्यीशुख्रीष्टस्य च कश्चित् सेवको विकी-
र्णीभूतान् द्वादश वंशान् प्रति नमस्कृत्य पत्रं लिखति।

२ हे मम भ्रातरो यूयं यदा बहुविधपरीक्षाभिः परीक्षिता भवथ तदा
३ परीक्षातो धैर्य्यम् उत्पद्यते,इति विज्ञाय ताः परीक्षाः सर्व्वप्रकारानन्दा-
४ स्पदं जानीत। अपरं यूयं यथा सिद्धाः सम्पूर्णाश्च भवेत केनापि गुणेन
विहीनाश्च न भवेत तदर्थं धैर्य्यस्य क्रियां सिद्धां कुरुत।

५ यदि युष्माकं कस्यापि ज्ञानाल्पता विद्यते तर्हि भर्त्सनां विना बाहुल्येन
६ सर्व्वेभ्यो ददाति य ईश्वरस्तं स याचतां ततस्तस्मै दायिष्यते। किन्तु
निःसंशयः सन् स विश्वासेन याचतां यतो यो जनः सन्दिग्धे स वायुना
७ चालित आस्फालितश्च समुद्रस्य तरङ्गइव भवति। अतएव स प्रभोः
८ किञ्चित् प्राप्स्यतीति न बुध्यतां। द्विमनस्कलोकस्य कापि गतिः स्थिरा
नहि।

९ अपरञ्च यो भ्राता दरिद्रः स स्वीयोच्चपदे समाह्लादतां किन्तु यो
१० भ्राता धनवान् स स्वीयनीचपदे समाह्लादतां यतः स तृणपुष्पवत् पति-
११ ष्यति। वस्तुतस्तु यद्वद् उदितादित्यतापात् तृणं शुष्यति तस्य पुष्पञ्च
पतति तस्य सौन्दर्य्यञ्च भ्रश्यति तद्वद् धनिलोकोपि स्वीयमूढतया
म्लास्यति।

१२ यो जनः परीक्षां सहते सएव धन्यः यतः परीक्षिते सति प्रभुः स्वप्रेम-
कारिभ्यो यत् जीवनमुकुटं दातुं प्रतिज्ञातवान् तन्मुकुटं प्राप्स्यति।

किन्तु कुमतौ सत्यां मदीयेयं कुमतिरीश्वराद् अजायत एतादृशीं कथां १३
कोपि न कथयेत् यतः पापेभ्य ईश्वरस्य कुमति र्न जायते सोपि कस्मै-
चित् कुमतिं न ददाति। किन्तु स्वलोभेनाकर्षिते लुब्धे च सति सर्व्वजनस्य १४
कुमति र्जायते। तस्मात् स लोभो गर्भधारिणीव पापं जनयति पापञ्च १५
सम्पूर्णं सन् मृतिं जनयति। हे मम प्रियभ्रातरो यूयं न भ्राम्यत। यत् १६
किञ्चिद् उत्तमं दानं सम्पूर्णानुग्रहश्च तत् सर्व्वं केवलाद् उपरिष्ठाद् आग- १७
च्छति, अर्थाद् यत्रान्यथाभावो विकारलेशोपि च नास्ति, एतादृशो यो
दीप्त्याकर ईश्वरस्तस्माद् आगच्छति। तस्य सृष्टिमध्ये एकविधप्रथमफल- १८
मिव वयं यथा भवेम तदर्थं स्वेच्छानुसारतः सत्यवाक्येनास्मान् जनया-
मास। अतएव हे मम प्रियभ्रातरो युष्माकम् एकैकः श्रवणे आग्रही कथने १९
च धीरो भवतु क्रोधेपि धीरो भवतु यस्मान् मनुजानां क्रोधाद् ईश्वरदत्तं २०
पुण्यं न जायते।

अपरञ्च यूयं सर्व्वाम् अशुचिक्रियां द्वेषनिवहञ्च परित्यज्य युष्माकम् २१
आत्मानो रक्षितुं शक्तिमद् यद् उपदिष्टवाक्यं तन् नम्रीभूय गृह्लीत।
अपरं श्रोतृमात्राः सन्तः स्वान् न वञ्चयित्वा वाक्यस्य कर्म्मकारिणो भवत। २२
यतो यः कश्चिद् वाक्यानुसारतः कर्म्म न कृत्वा श्रोतृमात्रस्तिष्ठति स २३
मुकुरे मुखदर्शिमनुजस्य सदृशः। स मुकुरे मुखद्रष्टा यथा स्वं दृष्ट्वापि २४
स्वयं कीदृश इति तत्स्थानाद् गत्वा विस्मरति सोपि तथा। किन्तु यः २५
कश्चिन् मुक्तिजनकव्यवस्थायां दृष्टिं कृत्वा तत्र तिष्ठति स विस्मारकः
श्रोता न सन् कर्म्म कुर्व्वन् स्वकार्य्ये धन्यो भवति। यदि युष्माकं कश्चित् स्वं २६
धार्म्मिकं मन्यते तथा स्वीयां रसनां न शासित्वान्तःकरणं वञ्चयति तर्हि
तस्य स धर्म्मो मुधा भवति। पितामातृहीनानां विधवानाञ्च वीक्षणं २७
संसारात् स्वं निष्कलङ्कत्वेन रक्षणम् अस्माकं पितुरीश्वरस्य साक्षात्
पवित्रो निर्म्मलश्च धर्म्मो भवति।

## २ द्वितीयोऽध्यायः।

१ अवश्यं धनिलोकानां समादरार्थं दरिद्रलोकानाम् अतुच्छीकरणं १४ धर्म्मरहितो विश्वासो मृषा, निष्फलसफलविश्वासयोः कथनञ्च।

१ हे मम भ्रातरो मनुजानाम् अपेक्षणात् तेजस्विप्रभो यीशुख्रीष्टस्य
२ धर्म्मपालनं युष्माकं न भवति। यतो युष्माकं सभां यदि स्वर्णाङ्गुरीयक-
युक्तः परिहितशुक्लवस्त्रश्च कश्चित् मनुज आगच्छति परिहितमलिन-
वसनः कश्चिद् दरिद्रश्च समायाति तदा यूयं तं परिहितशुक्लवस्त्रं जनं
३ पूर्व्वम् अभ्युत्थानादि कृत्वा अत्रोत्तमस्थाने भवान् उपविशतु, एतादृशीं
कथां कथयथ; त्वम् अमुष्मिन् स्थाने दण्डायमानस्तिष्ठ यद्वा ममाच पाद-
४ पीठ उपविशेति दरिद्रं जनं वदथ। तर्हि तेन यूयं किं मनःसु पक्षपातिनः
५ कुमन्त्रणया विचारयितारो न भवथ? हे मम प्रियभ्रातरः शृणुत, ईश्वरः
स्वस्मिन् प्रेमकारिभ्यो यद् राज्यप्रदानाय प्रतिज्ञातवान् तस्य राज्यस्यो-
त्तराधिकारिणः प्रत्ययधनेन धनवतश्च कर्त्तुं संसारस्थदरिद्रलोकान्
६ मनोनीतान् किं नाकरोत्? किन्तु यूयं दरिद्रलोकान् अवजानीथ। अपरं
धनवन्तः किं युष्मान् नोपद्रवन्ति विचारासनस्य सम्मुखं युष्मान् बलात्
७ किं न नयन्ति? अपरञ्च येन गौरवान्वितनाम्ना यूयं विख्यातास्ते किं
८ तन्नाम न निन्दन्ति? किन्तु त्वं प्रवासिनि स्वात्मवत् प्रीयस्व, एतच्छा-
स्त्रीयवचनानुसारतो यदि श्रेष्ठामेताम् आज्ञां पालयथ तर्हि भद्रं
९ कुरुथ। नोचेद् अनुरुन्ध तर्हि पापं कुरुत व्यवस्थालङ्घनाद् दोषिणश्च
१० भवथ। यतः प्रायेण सकलाज्ञाः पालयित्वा यदि कश्चिद् एकस्मिन्
११ स्खलनं करोति तर्हि स सर्व्वेच दोषी भवति। यस्मात् त्वं परदारान्
मा गच्छ, एतां कथां यः कथयति त्वं मनुष्यं मा हन्या इत्यपि स कथ-
यति; अतएव त्वं चेत् परदारान् न गत्वा मानुषं हंसि तर्हि त्वम् आज्ञो-
१२ लङ्घी भविष्यसि। मुक्तिजनिकया व्यवस्थया विचारिता भवितुम् उद्यता
१३ ये जनास्तद्व यूयं कथां कथयथ कर्म्म च कुरुथ। यतो यो जनः कदापि
नादयत निर्दयत्वेन तस्य दण्डो भविष्यति किन्तु दयात्रान् दण्डं जेष्यति।
१४ हे मम भ्रातरो यदि कश्चिद् वक्ति मम कर्म्म नास्ति किन्तु

प्रत्ययोऽस्ति तर्हि तेन प्रत्ययेन किं फलं? केवलप्रत्ययेन किं तस्य परित्राणं १५
भवितुं शक्नोति? युष्माकं कापि स्वसा सहजो वा यदि वसनहीनो दैव- १६
सिकभोज्यहीनो वा भवति, अपरं युष्माकं कोपि यदि शरीरप्रयोजनकं
द्रव्यं किमपि न दत्त्वा तान् इति वक्ति युष्माभिरुष्णगात्रैस्तृप्तैश्च सकुशलं १७
गम्यतां, तर्हि तेन को लाभः? सहायं विना प्रत्यय एकाकी तादृशो मृतवत्
तिष्ठति। अपरञ्च यदि कश्चिद् इमां वाणीं वदति, तव प्रत्यय आस्ते १८
मम तु कर्म्मास्ते तर्हि विना कर्म्म त्वं मां निजप्रत्ययं दर्शय, अहन्तु कर्म्मणा
त्वां निजप्रत्ययं दर्शयानि। एक ईश्वर आस्ते इति त्वं प्रत्येषि तद् उत्तमं १९
भवति किन्तु भूता अपि तद्वत् प्रतीय कम्पन्ते। तस्माद् हे अज्ञान मानव २०
कर्म्म विना प्रत्ययो मृत इव तिष्ठति इति विद्धि। अस्माकं पूर्व्वपुरुष २१
इब्राहीम् यज्ञवेद्या उपरि निजतनयं इस्हाकं उत्सृज्य किं कर्म्मणा पुण्य-
वत्त्वेन नागणि? अतस्तस्य क्रियया स प्रत्ययः कर्म्मणो जातः, तेन कर्म्मणा २२
तस्य प्रत्ययस्सासिद्धात् इति त्वया दृश्येत। अपरम् इब्राहीमा ईश्वरे २३
प्रतीते सति सा प्रतीतिस्तं प्रति पुण्यार्थम् अगण्यत सोपीश्वरमित्र इति
विख्यात इति यच्छास्त्रीयं लिखनं तत् तदा प्रत्यक्षत्वं गतं। तस्मात् २४
केवलेन प्रत्ययेन न भूत्वा मनुजो यत् कर्म्मणा पुण्यवत्त्वेन गण्यते तत् युष्माभि
र्वीक्ष्यते। अपरञ्च राहब्नामिका वाराङ्गणा चाराणाम् आतिथ्यं विधाय २५
पश्चाद् अन्येन पथा तान् विसृज्य किं तेन कर्म्मणा पुण्यवती नागण्यत?
तस्माद् आत्मानम् ऋते यद्वत् शरीरं मृतं तद्वत् कर्म्म ऋते प्रत्ययो २६
मृतो भवति।

---

### ३ तृतीयोऽध्यायः।

१ अन्यजनं दोषिणम् अकृत्वा स्वजिह्वाया अवश्यदमनीयत्वं १२ ज्ञानिलोकस्य पूर्व्वोक्तदोषपरिहारश्च।

हे मम भ्रातरो बहुषु शिक्षकेषु सत्सु बहुतरदण्डान् लप्स्याम इति १
विदित्वा यूयम् अनेके शिक्षका मा भूत। अस्माकं सर्व्वेषाम् बहुषु कार्य्येषु २
स्खलनं विद्यते चेत् कस्यापि वाक्ये किमपि स्खलनं नास्ति तर्हि स सिद्ध-

३ पूरुषः सन् सर्व्वाण्यङ्गप्रत्यङ्गानि वशीकर्त्तुं शक्नोति। पश्यत वयम् आज्ञा-
ग्राहिणः कर्त्तुं घोटकानां वक्त्रेषु खलीनं निधाय तेषां सर्व्वशरीराणि
४ परावर्त्तयामः। अपरं पोतान् प्रति निरीक्ष्य पश्यत तेऽतीवबृहदाकाराः
प्रचण्डवातैश्च चालिता अपि नाविकस्य मनोऽभिमतादल्पेन कर्णेन
५ परावर्त्त्यन्ते। तद्वद् रसना क्षुद्रतराङ्गं भवति किन्तु गाढगुरुतरां
कथां कथयति पश्यत स्वल्पो वह्निः कियन् महारण्यं भस्मसात् कर्त्तुं
६ शक्नोति। किन्तु रसना वह्निरिव पापारण्यमिव च अङ्गानाम् अन्त-
र्गता सती कृत्स्नं शरीरम् अशुचीकृत्य सृष्टेरीतिं दाहयति स्वयमपि
७ नरकानलेन दाह्यते। अपरञ्च पशुपक्षिसर्पजलचरादयः सर्व्वे जन्तवो
८ मनुजानां वशिन आसन् इदानीमप्यासते; किन्तु मृतिजनकगरलेन परि-
९ पूर्णा या दुष्टादम्या रसना तां कोऽपि वशीकर्त्तुं न शक्नोति। एकया
रसनया वयम् पितुरीश्वरस्य धन्यवादं कुर्म्मः, ईश्वरस्य मूर्त्तिवत् सृष्टमनुजं
१० शपामहे च। अस्माकम् एकस्मात् मुखाद् आशीः शापश्च निर्गच्छतः
११ हे भ्रातर एतादृशम् उचितं न भवति। प्रस्रवणः किम् एकेन छिद्रेण
१२ मिष्टं तिक्तञ्च द्विविधं तोयं निर्गमयति? हे मम भ्रातर उडुम्बरतरुः किं
जितफलं फलति? यद्वा द्राक्षावल्ली किम् उडुम्बरफलं फलितुं शक्नोति?
तद्वद् एकस्मात् प्रस्रवणाद् लवणं मिष्टञ्च द्विविधं तोयं नोत्पद्यते।
१३ युष्माकं मध्ये कश्चिद् यदि ज्ञानी सुबोधश्च तिष्ठति तदा स सदाचारं
१४ कृत्वा ज्ञानयुक्तमार्दवेन निजकर्म्म प्रकाशयताम्। किन्तु युष्माकं मनोमध्ये
यदि तिक्तेर्षा कलहस्य भवति तर्हि नात्मानः श्लाघध्वं सत्यताया
१५ विरुद्धम् अनृतं न कथयध्वं। तज्ज्ञानम् ऊर्द्धान् न निःसरति किन्तु सांसा-
१६ रिकं शारीरिकं भौतिकञ्च भवति। यतो यत्रेर्षाविवादौ तत्रैव कलहः
१७ सर्व्वाणि कुकर्म्माणि च। किन्तूर्द्धान्निःसृतं यज्ज्ञानं तत्प्रथमं निर्म्मलं
पश्चात् शान्तिमत् मृदु नमनशीलञ्च दयोत्तमफलाभ्यां परिपूर्णञ्च पक्ष-
१८ पातिलकपटत्वाभ्यां रहितञ्च भवति। अपरं शान्त्याचारिभिः शान्त्या धर्म्मफलं
शान्त्या रोप्यते।

४ चतुर्थोऽध्यायः।

१ युद्धलोभेर्षाहङ्कारादीनां विरुद्धा कथा। ११ परग्लानिकथनं १३ वाणिज्यदीर्घायुषो-रिच्छाया अकर्त्तव्यत्वञ्च।

युष्माकं मध्ये युद्धसंग्रामौ कुतो भवतः? युष्माकम् अङ्गप्रत्यङ्गे यद् विप- १
रीतकारिसुखाभिलषणं तस्मात् किं नहि? यूयं वाञ्छथ किन्तु किमपि २
लब्धुं न शक्नुथ, यूयं हन्तुम् उद्योगं कुरुथ तथापि न प्राप्नुथ। अपरं युद्धथ ३
संग्रामयथ च तथापि न प्राप्नुथ। यतो यूयं न प्रार्थयध्वे चेत् प्रार्थयध्वे तर्हि
स्वीयस्वीयाभिलाषेण व्ययितुम् अविहितं प्रार्थयध्वे तस्मात् न लभध्वे। हे ४
व्यभिचारिणः व्यभिचारिण्यश्च, एतस्य जगतो मित्रत्वम् ईश्वरस्य रिपुत्वं
भवतीति किं यूयं न वित्थ? यः कश्चित् संसारस्य मित्रं भवितुम् अभिल-
ष्यति स एवेश्वरस्य रिपुः। यूयं शास्त्रीयं वाक्यं मिथ्येति बुध्यध्वे? अपरम् ५
अस्माकम् अन्तरस्थ आत्मा किम् ईर्षां कर्त्तुं प्रवर्त्तयति? वरं स पुनरनु- ६
ग्रहाति तस्माद् इदम् उक्तम् आस्ते ईश्वरोऽभिमानिनो निरुद्ध नम्रान्
अनुगृह्लाति। अतएव यूयम् ईश्वरस्य वश्या भवत शैतानन्तु प्रतिरुन्ध ७
ततः स युष्माकम् अन्तिकात् पलायिष्यते। अपरम् ईश्वरस्य समीपव- ८
र्त्तिनो भवत तस्मिन् सति सोऽपि युष्माकं समीपवर्त्ती भविष्यति। हे
पापिनो यूयं करप्रक्षालनं कुरुध्वं, हे द्विमनोलोका यूयं निजान्तःकरणानि
परिष्कुरुत। अपरञ्च कातरा भवत शोकं विलापञ्च कुरुत, युष्माकं ९
हासस्थाने शोक उत्पद्यताम् आनन्दस्थाने तु निरानन्दत्वं भूयात्।
अपरञ्च प्रभोः समक्षं नम्रीभवत तस्मात् स युष्मान् उच्चीकरिष्यति। १०

हे भ्रातरो यूयं परस्परं मा दोषम् आरोपयत यतो भ्रातरि ११
दोषारोपे विचारे च कृते सति व्यवस्थायां दोषारोपणं विचारश्च भवति
यदि व्यवस्थां विचारयत तर्हि यूयं व्यवस्थापालयितारो न सन्तस्तस्या
विचारयितारोऽभवत। किन्तु रक्षितुं विनाशयितुञ्च समर्थ एकोविचा- १२
रयिता विद्यते तर्हीतरं विचारयितुं प्रवर्त्तमानः कस्त्वं?

अद्य श्वो वा वयम् अमुकनगरं गत्वा तत्र वर्षं यावत् स्थित्वा क्रयं- १३
विक्रयौ कृत्वा लाभं करिष्याम एतां कथां कथयमाना यूयम् इदानीम्

१४ अवधत्त। श्वः किं घटिष्यते, इति यूयं न जानीथ यतो युष्माकं जीवनं
१५ किं? तत् वाष्पं दृश्यं क्षणम् अदृश्यं वाष्पमिव भवति। तस्माद् ईश्वरस्ये-
च्छायां सत्यां वयं कियन्ति दिनानि जीवन्त एतत् कर्म्म तत् कर्म्म वा
१६ करिष्याम एतादृशी कथा युष्माभि र्वक्तव्या। यूयम् इदानीम् आत्म-
१७ श्लाघया गर्व्वथ स गर्व्वोऽसत्। अपरं यः कश्चित् सत्कर्म्म विज्ञाय तत् न
करोति तस्य पापं जायते।

---

### ५ पञ्चमोऽध्यायः।

१ इत्याय दुष्टधनिलोकानां भीतत्वमुचितं ७ धार्म्मिकलोकानां धैर्य्यदुःखसो-ढकत्वं १२ निरर्थकदिव्यनिषेधः १३ पीडासमये प्रार्थयितव्यं १९ भ्रान्तभ्रातुः परावर्त्तनीयत्वकथनञ्च।

१ हे धनवन्तो युष्माभिरवधीयताम् इदानीं आगमिष्यद्दुःखहेतोः क्रन्दतां
२ विलप्यताञ्च। यतो युष्माकं सम्पत्तिः पूतिगन्धि र्भविष्यति वसनं कीटै
३ र्जरिष्यति सुवर्णरौप्ये च कलङ्किते भविष्यतः। विशेषतो युष्माकं विरुद्धं स
कलङ्कः साक्ष्यं दास्यति, एवं वह्निवद् युष्माकं पललं भोक्ष्यते; यूयं शेषे
४ काले धनं सञ्चितवन्तः। पश्यत यैः कृषीवलै र्युष्माकं शस्यानि छिन्नानि
युष्माभिरन्यायं कृत्वा तेभ्यो वेतनं नादीयत तस्मात् ते सर्व्वे आर्त्तरावं
कुर्व्वन्ति स च कृषीवलानाम् आर्त्तरावः सेनापतेः परमेश्वरस्य कर्णौ प्रावि-
५ शत्। यूयं पृथिव्यां हृष्टपुष्टाः सन्तः सुखभोगेन कालं यापितवन्त
६ एवं महाभोज्यस्य दिनइव स्वेषाम् अन्तःकरणानि परितर्पितवन्तः। अप-
रञ्च यो धार्म्मिको युष्माकं विरुद्धं किमपि नाकरोत् तं दोषीकृत्य हतवन्तः।

७ हे भ्रातरो यूयं प्रभोरागमनं यावद् दीर्घकालं सहमानास्तिष्ठत।
पश्यत कृषीवलाः क्षेत्रस्य बहुमूल्यं फलम् अपेक्षमाणा यावद् आद्यान्तयो-
८ र्वृष्टिजलं न प्राप्नुवन्ति तावद् दीर्घकालं सहमानास्तिष्ठन्ति। तस्माद्
यूयमपि दीर्घकालं सहमानाः स्वीये स्वीयेऽन्तःकरणे स्थिरीभवत प्रभो-
९ रागमनं समीपवर्त्ति भवति। हे भ्रातरो यूयं यथा दण्ड्या न भवेत तदर्थं
१० परस्परं न ग्लानिं कुरुत पश्यत विचारयिता द्वारसमीपे दण्डायमान आस्ते। हे

मम भ्रातरो ये भविष्यद्वादिनः परमेश्वरस्य नाम्ना कथयामासुः,यूयं तान्
दुःखभोगस्य दीर्घकालसहनस्य च दृष्टान्तान् जानीत। पश्यत ये धैर्य्य- ११
शीलास्तान् वयं धन्यान् वदामः, यूयम् आयुबो धैर्य्यावलम्बनकथां श्रुत-
वन्तः,अपरं परमेश्वरस्य बहुदयां स्नेहञ्च दृष्ट्वा तस्याभिप्रायं विदितवन्तः।

हे भ्रातरो विशेषतः स्वर्गस्य वा पृथिव्या वान्यवस्तुनो नाम गृहीत्वा १२
शपथं मा कार्ष्ट किन्तु यूयं यथा दण्ड्या न भवेत तदर्थं केवलं स्वीकारा-
स्वीकारौ कुरुत।

अपरञ्च युष्माकं कश्चिद् यदि दुःखी भवति तर्हि स प्रार्थयतां १३
यदि कश्चिद् आनन्दितो भवति तर्हि स गीतं गायतु। युष्माकं १४
यदि कश्चित् पीडित आस्ते तर्हि स समाजस्य प्राचीनान् आह्वातु ते च
प्रभो र्नाम्ना तं तैलाभिषिक्तं कृत्वा तदर्थं प्रार्थयन्तां। तस्मात् प्रत्ययजात- १५
प्रार्थनया स पीडितो जीविष्यति प्रभुश्च तं स्वस्थं करिष्यति तथा स
यदि किमपि पापम् अकरोत् तदपि क्षमिष्यते। यूयं परस्परं स्वीय- १६
स्वीय दोषम् अङ्गीकुरुत तथा स्वास्थ्यार्थम् एकजनोऽन्यजननिमित्तं प्रार्थ-
यतां यतो धार्म्मिकस्यैकान्तप्रार्थना भृशं सफला भवति। एलीयो वय- १७
मिव सुखदुःखभोगी सन् अनावृष्टिहेतो र्गाढं प्रार्थितवान् तस्मात् तस्मिन्
देशे सार्द्धवत्सरत्रयं यावत् अनावृष्टिरभवत्। पश्चात् पुनः प्रार्थनायां १८
कृतायां सत्यां आकाशाद् जलवर्षणम् अभूत् ततस्तस्मिन् देशे शस्यान्यु-
दपद्यन्त।

हे भ्रातरो युष्माकं कोपि जनो यदि सत्यधर्म्माच् च्युतो भवति १९
कश्चिच्च तं परावर्त्तयति तर्हि यो जनः पुनरपि पापिनं भ्रान्तिमार्गात् २०
परावर्त्तयति स तस्यात्मानं मृत्युतो रक्षति तथा तस्य बहुपापम् आच्छा-
दयतीति स जानीयात्।

# पितरस्य प्रथमं सर्व्वसाधारणपत्रम्।

## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ३ अनुग्रहकारणाद् ईश्वरस्य धन्यवदनं भविष्यद्वादिभ्यः ख्रीष्टेन परित्राणकथनं १३ ईश्वरीयामोघवाक्यानुसारतास्तधर्म्मान् आचरितुं पितर-विनयश्च।

१ यीशुख्रीष्टस्य शोणितेन प्रोक्षितत्वार्थम् आज्ञाग्रहणार्थञ्चात्मना यथा
पवित्रीभवेयुस्तदर्थं पितुरीश्वरस्य पूर्व्वलक्ष्यानुसारेण मनोनीता ये सर्व्वे
२ लोकाः पन्त-गालातिया-कप्पदकिया-आशिया-बिथुनियादेशेषु वि-
कीर्णाः, तान् प्रति यीशुख्रीष्टस्य प्रेरितः पितरः पत्रं लिखति। युष्मान्
प्रति बाहुल्येन शान्तिरनुग्रहश्च भूयास्ताम्।
३ अस्माकं प्रभो र्यीशुख्रीष्टस्य तात ईश्वरो धन्यः सोतीवकृपां कृत्वा
४ मृतेभ्यो यीशुख्रीष्टस्योत्थानेन निर्म्मलाक्षयाजराधिकारार्थम् अस्माकम्
५ एकां जीवनदायिकां प्रत्याशां जनितवान्। अपरं शेषकाले प्रकाश्यपरि-
त्राणार्थं प्रत्ययेनेश्वरस्य शक्त्या रक्षितानां युष्माकं निमित्तम् अधिकारः
६ स्वर्गे स्थापितो भवति। यस्माद् युष्मासु हृष्टचित्तेषु सत्स्वपि साम्प्रतं
७ प्रयोजनानुसारतः कियत्कालार्थं नानापरीक्षाभि र्दुःखिनो भवत। तच्च
वह्निना परीक्षिताद् विनाश्यसुवर्णादपि बहुमूल्यवती या युष्माकं प्रत्ययस्य
परीक्षा सा यीशुख्रीष्टस्य प्रकाशसमये प्रशंसायाः सत्कारस्य गौरवस्य च
८ योग्या भविष्यति। यूयं तम् अदृष्ट्वापि तस्मिन् प्रेम कुरुथ, इदानीमपि
९ न पश्यन्तस्तस्मिन् प्रत्ययं कृत्वानिर्व्वचनीयेन स्वर्गीयेनानन्देनानन्दिता:
१० सन्तः प्रत्ययस्य फलं यद् आत्मनः परित्राणं तत् प्राप्नुथ। भविष्यद्वादिनो
युष्मान् प्रत्यनुग्रहस्य भविष्यद्वाक्यं कथयित्वा तस्मिन् परित्राणे चेष्टाम्
११ अनुसन्धानञ्च कृतवन्तः। अपरञ्च ख्रीष्टस्य दुःखभोगं पश्चाद् गौरवञ्च
भविष्यद्वाक्यञ्च कथयन्तस्तेषां मध्यवर्त्ती यः ख्रीष्टस्यात्मा स कस्यापि
१२ कस्यचित् समयं प्रकाशितवान् इति ते पर्य्यनुसन्धन्। ये स्वर्गात्

प्रेरितपवित्रात्मना युष्माकं सन्निधौ सुसंवादं प्राचारयन् तै र्यां कथां युष्मान् प्रति कथितवन्तस्तदनुसारेण भविष्यद्वादिनः स्वार्थम् अकृत्वास्मदर्थं कृतवन्त इति युष्मान् प्रति प्रकाशितम् अभवत्, एतेषु सर्व्वेषु दिव्यदूता निरीक्षितुं प्रयासं कुर्व्वन्ति।

अतएव मनःकटिबन्धनं कृत्वा सचेतनाः सन्तो यीशुख्रीष्टस्य प्रका- १३
शितसमये युष्माकं कृते योऽनुग्रह आनायिष्यते तत्प्रत्याशया शेषपर्य्यन्तं
तिष्ठत। अपरं पूर्व्वीयाज्ञानसमयकुत्सिताभिलाषानुसारतो न व्यवहृत्य १४
युष्मदाह्वानकारी यथा पवित्रो यूयमप्याज्ञाग्राहिसन्तानाइव सर्व्वस्मा- १५
चरणेषु तादृक्पवित्रा भवत। यतो लिखितम् आस्ते, अहं पवित्र इति- १६
हेतो र्यूयमपि पवित्रा भवत। अपरञ्च पक्षपातं विहाय एकैकमानुषस्य १७
कर्म्मानुसारेण विचारं करोति यः पिता तस्य समीपे यदि युष्माभिः प्रार्थ्यते
तर्हि भीत्या स्वेषां प्रवासकालः क्षेप्यताम्। यूयं स्वीयस्वीयपूर्व्वपुरुषाणु- १८
गतात् निरर्थकाचाराद् रूप्यसुवर्णवत् क्षयणीयवस्तुना मुक्ता न भूत्वा १९
निर्दोषनिष्कलङ्कमेषशावकवत् ख्रीष्टस्य बहुमूल्यशोणितेन मुक्ता भवत
इति जानीथ। स जगदारम्भात् पूर्व्वतो नियुक्त आसीत् किन्त्वीश्वरे यथा २०
युष्माकं प्रत्ययः प्रत्याशा च जायते तदर्थं मृतेभ्यस्तम् उत्थाप्य गौरवं दत्त- २१
वान् य ईश्वरस्तस्मिन् ईश्वरे तद्द्वारा प्रत्ययकारिणां युष्माकं कृते चरम-
काले प्रकाशितोऽभवत्। तस्माद् यूयं सत्यधर्म्मं पालयित्वा आत्मद्वारा २२
स्वीयं स्वीयं मनः परिष्कृत्य निष्कपटत्वेन परस्परं भ्रातृभिः सार्द्धं प्रेम
कृतवन्त इतिकारणात् पवित्रैरन्तःकरणैः सार्द्धं परस्परं गाढं प्रेम कुरुत।
यस्माद् यूयं क्षयणीयवीर्य्येण नहि किन्त्वक्षयणीयवीर्य्येणार्थाद् अम- २३
रेश्वरस्यानन्तकालस्थायिना वाक्येन पुनर्जन्म गृहीतवन्तः। यथा

२४ 'प्राणिमात्रस्तृणैस्तुल्यो नृशोभा तृणपुष्पवत्।
तृणानि परिशुष्यन्ति पुष्पाणि निपतन्ति च।
२५ किन्तु वाक्यं परेशस्यानन्तकालेषु तिष्ठति।'

तद्वाक्यं सुसंवादेन युष्माकम् अन्तिके प्राचार्य्यत।

## २ द्वितीयोऽध्यायः।

१ खीष्टस्य भित्तिमूलत्वं सेवकलोकानां मन्दिरतुल्यत्वं ११ सुखाभिलाषत्यागस्य शासकानां वशित्वस्य चाज्ञा १८ प्रभोः समीपे दासानां वशित्वस्यादेशश्च।

१ यूयं सर्व्वान् द्वेषान् सर्व्वप्रकारछलान् कापट्यानि ईर्ष्याः समस्तग्लानि-
२ कथाश्च परित्यज्य वृद्धिमेतुं नवीनशिशवइव सत्यवाक्यदुग्धं पिपासत।
३ यतो यूयं प्रभोरनुग्रहस्यास्वादं प्राप्तवन्तः। अपरं यो मनुष्यैरवज्ञातः
४ किन्त्वीश्वरेण मनोनीतो बहुमूल्यजीवत्प्रस्तरसदृशो भवति यस्य समीपम्
५ यूयं आगच्छथ यस्मिंश्च जीवत्प्रस्तराइव निचीयध्वे, तथा निश्चितपार-
मार्थिकमन्दिरं भवथ, एवं यीशुख्रीष्टेनेश्वरस्य समीपे ग्राह्यपारमार्थिक-
६ बलिम् उत्स्रष्टुं पवित्रयाजका भवथ। यतः शास्त्रे लिखितम् आस्ते

'पश्य सीयोनि शैलेऽहं बहुमूल्यं परीक्षितं।
एकं प्रधानकोणस्य प्रस्तरं स्थापयामि हि।
प्रत्येष्यति जनो यस्तं स तु नैव त्रपिष्यति।'

७ एतत्कारणात् प्रत्ययिनां युष्माकं समीपे स बहुमूल्यो भवति किन्त्वाज्ञा-
लङ्घिनः प्रति निचेतारो यं पाषाणं तुच्छीकृतवन्तः स प्रधानकोणस्य
८ पाषाणः सन् बाधाजनकः स्खलनकारकश्च पाषाणो जातः। त ईश्वरस्य
९ वाक्ये न विश्वस्य स्खलनं प्राप्ताः, तत्रापि नियुक्ता अभवन्। किन्तु यो
युष्मान् अन्धकारात् स्वीयाश्चर्य्यदीप्तिमध्यं प्रत्याहूतवान् यूयं यथा तस्य
प्रशंसां प्रकाशयेत तदर्थं यूयं मनोनीतवंशो राजकीययाजककुलानि
१० पवित्रप्रजाः क्रीतलोकाश्च जाताः। यूयं पूर्व्वम् ईश्वरस्य लोका नाभवत
किन्त्विदानीं तस्य लोका अभवत पूर्व्वं तस्यानुग्रहं न प्राप्तवन्तः किन्त्व-
धुना प्राप्तवन्तः।

११ हे प्रियभ्रातरो युष्मान् इति विनीय वच्मि यूयं प्रवासिनो विदे-
शिनश्च लोका इव मनसः प्रातिकूल्येन योधिनः शारीरिकात् सुखाभि-
१२ लाषान् निवर्त्तध्वम्। अपरम् अन्यदेशिभिः र्हतदुष्कर्म्मलोकानामिव कलङ्के
कृते सति ते युष्माकं सत्कर्म्म विलोक्य कृपानुपदस्य समये ईश्वरस्य गुणा-
१३ नुवादं कुर्व्वन्ति तदर्थं तेषां मध्ये सदाचारम् आचरत। अपरञ्च मनुज

सर्व्वशासकस्य, अर्थात् सर्व्वश्रेष्ठराजस्य तथा दुष्टानां दमनार्थं शिष्टानां १४
पालनार्थं तेन ये सर्व्वे लोकाः प्रेरिताः प्रभोः कृते तेषां वश्या भवत। यतो १५
यूयं यत् सत्कर्म्म कृत्वा निर्ब्बोधमानुषाणाम् अज्ञानत्वं जडीकुरुथ मुक्ताः
सन्तोऽपि स्वेषां मुक्तिं दोषाच्छादनं न कृत्वा, ईश्वरस्य दासा इव भवेत १६
एतद् ईश्वराभिमतम्। सर्व्वान् जनान् समाद्रियध्वं भ्रातृषु प्रेम कुरुध्वं १७
ईश्वराद् बिभीत भूपतीन् सम्मन्यध्वम्।

हे दासा यूयं सर्व्वप्रकारैः समादरैः स्वेषां प्रभूनां वश्या भवत केवलं १८
साधूनां दयालूनां प्रभूनां नहि किन्तु निष्ठुरप्रभूनामपि वश्या भवत।
यतः कश्चिच् चेद् ईश्वरस्य माननाद् अन्यायं भुक्त्वा क्लेशं सहते तर्हि तस्य १९
तदेव कर्म्म ग्राह्यं भवति नो चेद् यूयं स्वेषाम् अपराधकारणात् चपेटाघातं २०
भुक्त्वा सहध्वे तर्हि तेन का प्रशंसा ? किन्तु सत्कर्म्मकारणात् कस्मिंश्चिद्
दुःखे समुपस्थिते यदि तत् सहध्वे तर्हि तद् ईश्वरस्य ग्राह्यं कर्म्म भवति।
तदर्थमेव यूयम् आहूता अभवत यतो यूयं यथा ख्रीष्टस्य पदचिह्नै २१
र्व्रजेत तदर्थं स स्वयं क्लेशं भुक्त्वा युष्मान् एकं दृष्टान्तम् अदर्शयत्। स २२
किमपि पापं न कृतवान् तस्य वदने कापि छलस्य कथा नासीत्। एवं २३
परै र्निन्दितोऽपि प्रतिनिन्दां न कृतवान् तथा दुःखं प्राप्यापि कमपि न
भर्त्सितवान् किन्तु न्यायविचारयितुः समीपे स्वं समर्पितवान्। अपरञ्च २४
वयं यथा पापस्य पक्षे मृताः सन्तो धर्म्मस्य पक्षे सजीवा भवेम तदर्थं
क्रुशोपरि स्वेन शरीरेणास्माकं पापानां भारम् ऊढवान् तस्य प्रहारै
र्यूयं स्वस्था अभवत। यतो यूयं पूर्व्वं भ्रमणकारिमेषा इव आध्वं किन्त्व- २५
धुना युष्माकम् पालकस्य आत्मनां रक्षकस्य च समीपं परावर्त्यागतवन्तः।

---

३ तृतीयोऽध्यायः।

स्त्रीपुरुषयोः कर्त्तव्यकर्म्मनिर्णयः ८ परस्परं प्रेमकथनं धर्म्मार्थं दुःखभोगकथनं आत्मना पूर्व्वकालीनलोकान् प्रतीश्वरस्य कथाप्रचारश्च।

हे योषितो यदि कस्याश्चित् पतिरीश्वरस्य वाक्ये विश्वासहीनो भवति १
तर्हि योषितां सभयं पविचाचरणं विलोक्य वाक्यं विना तासाम्

२ आचरणेन धर्म्मं प्रति यद् अनुरक्ता भवन्ति तदर्थं यूयमपि स्वीयस्वीय-
३ स्वामिनो वश्या भवत। अपरं केशसंस्कारः स्वर्णाभरणानि परिधेयवस्त्राणि
४ चेत्यादीनि बाह्यभूषणानि युष्माकं भूषणानि न भूत्वेश्वरस्य साक्षात्
बहुमूल्यम्रदुताशान्तियुक्तमनसो यो गूढस्वभावः सएव युष्माकम् अलङ्-
५ भूषणं भूयात्। पूर्व्वकालिकाः पवित्रस्त्रिय ईश्वरे प्रत्याशां कृत्वा स्वीय-
६ स्वीयस्वामिनां वशतापन्नाः सत्य इत्थं स्वा भूषिता अकुर्व्वन्। तद्वत् सारा
इब्राहीमं प्रभुम् उक्त्वा तदाज्ञाग्राहिणी बभूव यूयमपि सत्कर्म्म कृत्वा
७ निर्भया निःशङ्काश्च सत्यस्तस्याः कन्याइव भवत। हे पुरुषा युष्माकं प्रार्थ-
नाकर्म्मणि यथा कोपि विघ्नो न जायते तदर्थं यूयमपि ज्ञानतः स्वीय-
स्त्रीभिः सार्द्धम् उषित्वा ता दुर्व्वलताया: पात्राणि स्वैः सार्द्धं जीवन-
दायकानुग्रहस्योत्तराधिकारिण्यश्च विज्ञाय सत् कुरुत।
८ विशेषतो यूयं सर्व्वे एकमनसः परदुःखभोगिनो भ्रातृप्रेमिणो दयावन्तः
९ सद्भाविनश्च भवत। अपरम् अनिष्टस्य परिशोधेनानिष्टं निन्दाया: परि-
शोधेन निन्दां न कृत्वा यद् यूयम् आशीर्व्वादाधिकारिणो भवितुम्
आहूता इति विदित्वा आशिषं वदत। यथा

१० 'को जनो मङ्गलं द्रष्टुं चिरं जीवितुमिच्छति।
जिह्वां सोऽसत्कथातः स्वां वञ्चनावाक्यतस्तथा।
सततन्तु स्वकीयोष्ठौ संरक्षतु प्रयत्नतः।
११ दुराचारं परित्यज्य करोतु स तु सत्क्रियां।
ईहित्वा मङ्गलञ्चैव तत्रैव स प्रवर्त्तताम्
१२ अस्ति दृष्टिः परेशस्य धार्म्मिकानां गणाय वै।
तस्य कर्णौ तथासाते तेषान्तु प्रार्थनाम्प्रति।
तेषां विरुद्धमास्यन्तु विद्यते पारमेश्वरम्।'

१३ अपरं यदि यूयम् उत्तमजनस्यानुगामिनो भवथ तर्हि को युष्मान्
१४ हिंसितुं शक्नोति? यदि धर्म्मार्थं क्लेशभोगं कुरुथ तर्हि यूयं धन्याः। अतएव
तेभ्यो भयाद् भीतास्चञ्चलाश्च न भूत्वा मनोमध्ये प्रभुं परमेश्वरं प्रपद्य-

ध्वम्। अपरञ्च युष्माकम् अन्तःकरणस्थप्रत्याशायां यः कश्चिद् युष्मान् १५
पृच्छति मार्द्दवेनादरेण च तस्मा उत्तरं दातुं सर्व्वदा सज्जीभवत। एवं १६
येन ते युष्मान् दुष्कर्म्मकारिणो विज्ञाय ख्रीष्टधर्म्मे युष्माकम् उत्तमाचरणम्
अपवदन्ते तस्माद् यथा लज्जन्ते तदर्थं यूयम् उत्तममनसो भवत।
यदीश्वरेच्छा भवति तर्हि युष्माभि र्दुष्कर्म्म न कृत्वा सत्कर्म्म कृत्वा दुःख- १७
भोजनं श्रेयः। यस्माद् ईश्वरेण सार्द्धम् अस्माकम् मेलनं कर्त्तुं ख्रीष्टः स्वयं १८
धार्म्मिकः सन् अधार्म्मिकाणां विनिमयेन दुःखभोगं कृतवान् तथा शरी-
रेण हतः सन् आत्मना सजीवोऽभवत्। अपरञ्च नोहस्य विद्यमानत्वकाले १९
ऽर्थात् यस्य पोतस्य मध्य अल्पे ऽर्थाद् अष्टावेव प्राणिनो जलाद् रक्षिता
अभवन् तस्य पोतस्य सज्जीकरणकाल ईश्वरस्य दीर्घकालसहनसमये २०
ये ये प्राणिनस्तत्काले ऽनाज्ञाग्रहणकारणात् कारायां सन्ति तेषां
समीपं गत्वा तेनात्मना वाक्यं प्रकाशयामास। पुनश्च यः स्वर्गम् आरुह्य ईश्व- २१
रस्य दक्षिणपार्श्वे उपविष्टवान् यस्य च दिव्यदूताः शासकाः पराक्रमिणश्च
वश्या अभवन् तादृशो यो प्रभुरख्रीष्टस्तस्योत्थानेन यन् मज्जनं शरीरपरिष्का- २२
रार्थं न भूत्वेश्वरं प्रति सरलमनसः साक्ष्यं भवति तत् तस्य जला-
प्लावनस्य दृष्टान्तो भूत्वेदानीम् अस्मान् रक्षति।

---

४ चतुर्थोऽध्यायः।

१ ख्रीष्टवद् दुःखं भोक्तुं सज्जीभवतेति विनयः ७ धर्म्मम् आचरितुं विनयः १२ धर्म्मार्थं दुःखभोगिनां सान्त्वनायाः कथनञ्च।

ख्रीष्टोऽस्माकं कृते शरीरेण दुःखं भुक्तवान् तस्माद् यूयमपि तद् १
भोक्तुं सज्जीभवत। यतो यः कश्चिद् दुःखं भोक्तुम् उद्यच्छति स पापात् २
मुक्तः सन् मानुषिकेच्छाया वशो न भूत्वा यावज्जीवम् ईश्वरेच्छानुसारेण
कालं यापयति। अपरं कामः कुत्सिताभिलाषो मद्यपानं रङ्गरसो मत्तता ३
घृणार्हदेवार्च्चा चैतानि सर्व्वाणि व्यवहृत्य देवार्च्चकानाम् इच्छानुसारतः
कर्म्मकरणाद् अस्माकम् आयुषः क्षयोऽभवत् तदेव यथेष्टं। यूयम् एतादृग् ४

तैः सार्द्धं दुष्टताचरणं न कुरुथ तस्मात् ते आश्चर्य्यं विज्ञाय युष्मान्
५ निन्दन्ति। जीवतां मृतानाञ्च लोकानां विचारं कर्त्तुम् उद्यतो य ईश्वर-
६ स्तस्मै तैः स्वीयस्वीयकर्म्मणां लेखा दातव्यः। अतएव ये हता अभवन्
ते मानुषिकशरीरेण दण्डाज्ञां प्राप्यापीश्वरेण सह यथा जीवन्तस्तिष्ठन्ति
तदर्थं तेषां समीपे सुसंवादः प्रचारितोऽभवत्।

७ समस्तकार्य्याणां चरमकाल उपतिष्ठति तस्मात् सावधानाः सन्तः
८ प्रार्थनां कर्त्तुं सचेतना भवत। विशेषतो यूयं परस्परं गाढं प्रेम कुरुत
९ यतः प्रेम बहुपापान्याच्छादयति। परस्परम् अकातरम् आतिथ्यं कुरुत
तथा युष्माकम् एकैको जनो यादृशम् अनुग्रहदानं लब्धवान् तदनुसाराद्
१० ईश्वरस्य नानानुग्रहाणाम् उत्तमभाण्डागाराधिपा इव परस्परं वितरत।
११ अपरं यदि कश्चित् कथयति तर्हीश्वरस्य कथामिव कथयतु तथा यत्
कश्चित् सेवते तर्हीश्वरदत्तसामर्थ्यानुसारेण सेवतां तेन सर्व्वस्मिन् कार्य्ये
यीशुख्रीष्टेनेश्वरस्य गौरवं प्रकाशिष्यते; तस्मै गौरवं पराक्रमश्च सर्व्वदा
भवतु।

१२ हे प्रिया युष्माकं परीक्षार्थं या विपद् उपतिष्ठति ताम् असम्भवघटनां
१३ विज्ञाय नाश्चर्य्यं जानीत किन्तु ख्रीष्टस्य महिम्नः प्रकाशकाले यूयम्
आनन्देन पुलकिता भविष्यथ तस्मात् तस्य दुःखस्य भागित्वाद् आनन्दत।
१४ अपरञ्च यदि ख्रीष्टस्य नामकारणात् कलङ्किता भवथ तर्हि यूयं धन्या
गौरवम् ईश्वरस्यात्मा च युष्माकं मध्येऽवतिष्ठते स तै र्निन्दितोऽपि
१५ युष्माभिः सम्मानितो भवति। किन्तु युष्माकं कोऽपि हन्तृचौरदुष्क-
१६ र्म्मकृदनधिकारचर्च्चकानाम् इव दण्डं न भुङ्क्तां। यदि ख्रीष्टियानत्वात् क्लेशं
प्राप्नोति तर्हि स न लज्जमानस्तद्दुःखकारणाद् ईश्वरस्य गुणान् कीर्त्त-
१७ यतु। अपरम् ईश्वरस्य मन्दिरे दण्डारम्भसमय उपतिष्ठति स दण्डो
यदि प्रथमम् अस्मान् प्रत्येव भवति तर्हीश्वरस्य सुसंवादाग्राहिलोकानां
१८ शेषा गतिः का भविष्यति? अपरं धार्म्मिकलोकानां परित्राणं यदि
दुःसाध्यं भवति तर्ह्यधार्म्मिकाः पापिष्ठाश्च लोकाः कं शरणं प्रजिष्यन्ति?

ईश्वरेच्छानुसाराद् ये दुःखं भुञ्जते ते सत्कर्म्म कुर्व्वन्तः स्वं स्वम् आत्मानं १९
विश्वास्यस्रष्टुः समीपे समर्पयन्तु।

---

५ पञ्चमोऽध्यायः।

१ प्राचीनलोकानां कर्त्तव्यं कर्म्म ५ यूनामन्येषाञ्च कर्त्तव्यं कर्म्म १० मङ्गलप्रार्थना
१२ समाप्तिकथा नमस्कारप्रेषणञ्च।

प्राचीनः ख्रीष्टीयदुःखभोगस्य साक्षी प्रकाशिष्यमाणस्य गौरवस्यांशी १
चाहं युष्माकं प्राचीनान् प्रति विनयेनैतत् कथयामि। युष्माकं मध्यस्थित २
ईश्वरस्य यो ऽजस्तं पालयत तथावश्यकत्वेन नहि किन्तु स्वेच्छानुसारतः
कुत्सितलाभार्थं नहि किन्तु सन्तुष्टमनसा तस्य वीक्षणं कुरुत। अपरम् ३
अधिकारस्य प्रभवो न सन्तो ऽजस्य दृष्टान्तस्वरूपा भवत। तस्मात् प्रधान- ४
पालक उपस्थिते यूयम् अम्लानगौरवकिरीटं लप्स्यथ।

हे युवानो यूयमपि प्राचीनलोकानां वश्या भवत, इत्थं परस्परं ५
सर्व्वेषां वशतापन्नाः सन्तो नम्रताभरणेन भूषिता भवत, यत ईश्वरो-
ऽहङ्कारिणः प्रतिरोध्य नम्रलोकान् प्रत्यनुग्रहं करोति। अतस्माद् ईश्वरो ६
यथा युष्मान् उचितसमये उन्नतान् करोति तदर्थं यूयं तदीयबलवत्-
करयोरधो नम्रीभूय तिष्ठत। ईश्वरो युष्मान् प्रति मनो निदधाति ७
तस्माद् यूयं स्वेषां निखिलचिन्ताया भारं तदुपरि समर्पयत। पुनश्च ८
युष्माकं विपक्षः शैतान् सिंहइव गर्जन् कं ग्रसिष्यतीति मृगयन् भ्रमति
तस्माद् यूयं जाग्रतः सन्तः सावधानास्तिष्ठत। अपरञ्च युष्माकं जग- ९
न्निवासिभ्रातृणाम् एतादृशं दुःखम् आस्ते, इति विदन्तो यूयं ख्रीष्टधर्म्मे
स्थिराः सन्तस्तेन सार्द्धं युध्यत।

अनन्तगौरवं प्राप्तुं ख्रीष्टयीशुनास्मान् आहूतवान् यः सर्व्वानुग्राही- १०
श्वरः स युष्माकं क्षणिकदुःखभोगात् परं युष्मान् सिद्धान् स्थिरान्
सबलान् निश्चलांश्च करोतु। तस्य गौरवं पराक्रमश्च सर्व्वदा प्रकाशतां। ११
तथास्तु।

१२ यम् अनुग्रहं प्राप्य सुस्थिरा आध्वे स ईश्वरस्य सत्योऽनुग्रह इति
विनयपूर्व्वकं प्रमाणीकृत्य यं सिल्वानं युष्माकं विश्वास्यभ्रातरं विजानामि
१३ तद्द्वारा संक्षेपेण युष्मान् प्रति पत्रम् अलिखम्। बाबिलस्थो मनोनीतः
१४ समाजो मम पुत्रो मार्कश्च युष्मान् नमस्कारं वेदयति। प्रेमचुम्बनेन पर-
स्परं नमस्कुरुत। यीशुख्रीष्टाश्रितानां युष्माकं सर्व्वेषां शान्ति र्भूयात्।
इति।

---

# पितरस्य द्वितीयं सर्व्वसाधारणपत्रम्।



## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं २ अनुग्रहार्थं कृतज्ञत्वं, नानाधर्म्मकर्म्म कर्त्तुं पितरस्य विनयः १२ निजमरणस्य कथनं ख्रीष्टस्य सत्यत्वाद्व्लकथनञ्च।

१ ये जना वयमिवास्माकम् ईश्वरस्य, अर्थात् त्रातु र्यीशुख्रीष्टस्य पुण्येन
२ अमूल्यप्रत्ययस्याधिकारिणो जातास्तान् प्रति यीशुख्रीष्टस्य किङ्करः
प्रेरितश्च यः शिमोन् पितरः स पत्रं लिखति। अस्मदीश्वरप्रभुयीशु-
विषयकज्ञानेन युष्मान् प्रति बाहुल्याद् अनुग्रहः शान्तिश्च भूयास्ताम्।
३ यो गौरवाच्छोभार्थम् अस्मान् आहूतवान् तस्य ज्ञातत्वात् तदीश्वरीयया
४ शक्त्या परमायुरीश्वरसेवनयो र्यांग्यं सर्व्वम् अस्मभ्यम् दत्तं। अपरं
कुत्सिताभिलाषेण या दुष्टता संसारे विद्यते यथा वयं तां त्यक्त्वेश्वरीय-
स्वभावस्य भागिनो भवेम तदर्थम् अस्मभ्यं बहुमूल्यवती प्रतिज्ञा
५ दत्ता। इतिकारणाद् यूयं बहु यतित्वा प्रत्ययेनाक्षोभम् अक्षोभेण ज्ञानं
६ ज्ञानेन परिमितभोजनं परिमितभोजनेन धैर्य्यं धैर्य्येणेश्वरसेवनम् ईश्वर-
७ सेवनेन भ्रातृषु स्नेहः भ्रातृस्नेहेन प्रेम एतानि क्रमशो योजयत। एतानि
८ सर्व्वाणि यदि युष्माकम् अन्तरे तिष्ठन्ति वर्द्धन्ते च तर्ह्यस्माकं प्रभो